# AHIRBUDHNYA SAMHITA

OF THE

# PĀNCARĀTRA ĀGAMA

EDITED FOR THE ADYAR LIBRARY BY

M. D. RĀMĀNUJĀCĀRYA

HEAD PAṆḌIT, ADYAR LIBRARY

UNDER THE SUPERVISION OF

F. OTTO SCHRADER, PH.D.

DIRECTOR, ADYAR LIBRARY

VOLUME I

ADYAR LIBRARY

ADYAR, MADRAS, S.

1916

श्रीपाञ्चरात्रागमान्तर्गता

# अहिर्बुध्न्यसंहिता

( पूर्वार्धम् )

अडैयार् पुस्तकालयप्रधानपण्डितपदवीमधितस्थुषा

श्रीमद्वाधूलकुलावतंसेन

**देवशिखामणिना रामानुजाचार्येण**

संशोधिता

तेनैव विरचितया

क्वाचित्कया विषमस्थलटिप्पण्या च

सनाथीकृता

अडैयार् पुस्तकालयाध्यक्षेण

वसन्तमुद्राक्षरशालायां

मुद्रापिता ।

शकाब्दः १८३९ । हौणाब्दः १९१६ ।

# PREFATORY NOTE

THE Director of the Adyar Library, being a German subject, was interned as a prisoner of war, first at Madras and subsequently at Ahmednagar, when forme 56 of the present work had been struck off. Seeing that by that time the general editorial methods were sufficiently established, it was decided to proceed with the work so as not to delay its issue beyond measure. Owing to these circumstances the book has suffered in a few respects: (1) the proofs of the last 220 pages as well as those of all prefatory matter and the indexes have not been corrected by the supervisor; (2) a number of doubtful readings, the discussion of which had been postponed, had to be settled by the Paṇḍit alone; (3) a list of the rare words occurring in the text has been omitted; (4) though (unknown to the undersigned) footnotes, except those relating to the *varietas lectionis*, had been expressly excluded from the plan of the work, a Ṭippaṇī without a formal beginning but with a gorgeous colophon (p. 643) has found its way into the work from about p. 479 onwards; and (5) the Sanskrit prefaces have been written exclusively from the Indian and confessional standpoint, without taking into account certain problems which would have been discussed at least in the first preface, had not Dr. Schrader, owing to his internment, been placed before the alternative of either accepting or rejecting them *in toto*. Paṇḍit Rāmānujācārya's preface is essentially an apology of the Pāñcarātra from the standpoint of the orthodox Viśiṣṭādvaitin, and as such a good piece of work. Indian readers particularly will be

glad to see the work also prefaced by such a valued authority on the Pāñcarātra as the esteemed author and poet Kumāratātārya Kavi Bhūṣaṇa. As to the edition of the text, Dr. Schrader desires to state that he has met the Paṇḍit's wishes and habits in several unessential points where it might have been expected that he would have opposed them, for instance in allowing the double Avagraha to indicate an elided ā; and he wishes to acknowledge that the Paṇḍit has done his work with marked ability and unfailing zeal. An exhaustive monograph intended to serve as an introduction to the study of the present work has been just terminated by Dr. Schrader and is now in the press. It will be issued by the Adyar Library as a separate but uniform companion volume to this text-edition, under the title of *Introduction to the Pāñcarātra and the Ahirbudhnya Saṃhitā.*

For the loan of manuscripts we beg to tender our sincere thanks to the following Institution and Gentlemen :

H. H. the Mahārāja of Travancore,
The Mysore Government Oriental Library, Mysore,
M. R. Ry. Kalale Devarājabhaṭṭa, Kalale,
M. R. Ry. Rāmaswāmibhaṭṭa, Melkote (2 MSS.),
M. R. Ry. Narasiṃhabhaṭṭa, Melkote (2 MSS.).

I must not conclude these few remarks without gratefully mentioning the courtesy shown by the military censor at Ahmednagar in passing, in connection with this work, to and from Dr. Schrader, much correspondence, MS. copies, and printed matter, often in scripts and languages not to be checked quite easily.

JOHAN VAN MANEN,
*Assistant Director*,
*Adyar Library*.

ADYAR,
*May* 1916.

# संपुटद्वयात्मकैतत्पुस्तकस्थविषयसूची



---

॥ श्रीः ॥

# अहिर्बुध्न्यसंहिताया अध्यायार्थाः स्वावसरे विशदतरं शीर्षिकाद्वारा प्रतिपादितास्तत्रैव सुगमा इति बुद्धिसौकर्यार्थमतिसंग्रहेणात्र प्रकाश्यन्ते । यथा

पूर्वार्धे—

| | | |
|---|---|---|
| १ | प्रथमेऽध्याये | — शास्त्रावतरणं कृतम् |
| २ | द्वितीये | — षाड्गुण्यब्रह्मविवेकः |
| ३ | तृतीये | — सुदर्शनशब्दवाच्यक्रियाशक्तेर्वैश्वरूप्यसंक्षेपः |
| ४ | चतुर्थे | — प्रतिसंचरवर्णनम् |
| ५ | पञ्चमे | — शुद्धसृष्टिवर्णनम् |
| ६-७ | षष्ठसप्तमयोः | — शुद्धेतरसृष्टिवर्णनम् |
| ८ | अष्टमे | — जगदाधारनिरूपणम् |
| ९ | नवमे | — अशुद्धजगदाधारनिरूपणम् |
| १० | दशमे | — अर्थात्मकप्रमाणनिरूपणम् |
| ११ | एकादशे | — शब्दात्मकप्रमाणव्यूहनिरूपणम् |
| १२ | द्वादशे | — तद्विशेषनिरूपणम् |
| १३ | त्रयोदशे | — प्रमाणार्थनिरूपणम् |
| १४ | चतुर्दशे | — जीवस्य संसारहेतुतदुद्धरणप्रकारवर्णनम् |
| १५ | पञ्चदशे | — अधिकारिनिरूपणम् |
| १६ | षोडशे | — वर्णोत्पत्तिनिरूपणम् |
| १७ | सप्तदशे | — वर्णसंज्ञानिरूपणम् |
| १८ | अष्टादशे | — मन्त्रोद्धारक्रमनिरूपणम् |
| १९ | एकोनविंशे | — अङ्गमन्त्रोद्धारक्रमनिरूपणम् |

---

## मुद्रणोपयोगितयाऽस्याः संहितायाः सज्जीकरणे आदर्शीकृतानां प्राचीनपुस्तकानां नामधामादिकं यथा—

A. अस्मदीयपुस्तकालयस्थं सप्तचत्वारिंशदधिकशतपत्रात्मकं तालपत्रमयं नातिशुद्धं ग्रन्थाक्षरलिखितं प्रायः पञ्चसप्ततिवर्षदेशीयं समग्रं A इति संज्ञितम् ।

B. महीशूरमहासंस्थानस्थापितराजकीयप्राचीनसंस्कृतकोशागारस्थं पञ्चाधिकशतद्वयपत्रात्मकमान्ध्राक्षरलिखितं नातिशुद्धं B इति संज्ञितम् । इदं च पुस्तकं प्रायः A C पुस्तकयोः शैलीमनुसरति.

C. अस्मदीयपुस्तकालयस्थं एकोनशतपत्रात्मकं (कागद)पत्त्रमयं नातिशुद्धं ग्रन्थाक्षरलिखितं प्रायः पञ्चविंशतिवर्षदेशीयं मध्ये बहुभिःपत्त्रैर्विलुप्तं C इति संज्ञितम् ।

D. श्रीमतः केरलदेशीयानन्तशयनमहाराजस्य प्राचीनसंस्कृतकोशागारस्थं एकोनत्रिंशदधिकशतपत्रात्मकं श्रीतालपत्त्रमयं प्रायःशुद्धं केरलाक्षरलिखितं प्रायःशतवर्षदेशीयं D इति संज्ञितम् । इदं च पुस्तकं लेखकदोषेण तत्रतत्रान्यथाकृतमपि प्रायः प्राचीनपाठप्रदर्शकम् । एवं सगुणस्याप्यस्य एक एवायं दोषः यत् अष्टपञ्चाशेऽध्याये एकोनपञ्चाशश्लोकस्य तृतीयचरण एवेदं विश्राम्यति, इति ।

E. महीशूरदेशवर्तिकपिलानदीदक्षिणतीरस्थं "कल्ले" इत्यग्रहारमधितिष्ठतः श्रीमतो देवराजभट्टारकमहाशयस्य गृहे वर्तमानं त्र्युत्तरशतपत्त्रात्मकं

तालपत्त्रमयं प्रायःशुद्धं ग्रन्थाक्षरलिखितं शतद्वयवर्षदेशीयत्वेन निश्चीयमानं E इति संज्ञितं समग्रं समीचीनं च ।

F. महीशूरदेशालंकारभूतश्रीयादवगिरिदिव्यक्षेत्रनिवासिनः श्रीरामस्वामिभट्टारकस्य गृहे वर्तमानं चतुःसप्तत्यधिकशतपत्त्रात्मकं तालपत्त्रमयं अंशतः शुद्धं ग्रन्थाक्षरलिखितं प्रायः पञ्चसप्ततिवर्षदेशीयं F इति संज्ञितं समग्रम् ।

G. तस्यैव तथाविधमेवान्यत्पुस्तकं G इति संज्ञितम् । इदं च पूर्वपुस्तकापेक्षया बहुभिःपत्त्रैर्न्यूनमसमग्रं च ।

H. I. इदं च पुस्तकद्वयं यथोक्तं श्रीयादवाचलमधिष्ठितवतः संप्रति स्वर्गगतस्य श्रीनृसिंहभट्टारकस्य गृहे वर्तमानं शुद्धप्रायं द्वयोरेकमेव समग्रम् । द्वयोरप्यनयोः सर्वात्मना F. पुस्तकानुसारितया तन्निर्देशेनैव निर्देशो भवतीति मत्वा प्रतिपृष्ठं पाठभेदप्रदर्शनावसरे न पृथक्स्वसंज्ञया निर्देशः कृतः ।

अस्याश्च मुद्रणे उपदर्शितरीत्या यैर्महाशयैः पुस्तकसाहाय्यमाचरितं तेषां परःसहस्रान् धन्यवादान् निर्माय समुपायनीकुर्मः । इति ।

॥ विजयतां श्रीसुदर्शनः ॥

येन त्रितो अर्णवान्निर्बभूव

येन सूर्यं तमसो निर्मुमोच ।

येनेन्द्रो विश्वा अजहादरातीः-

स्तेनाहं ज्योतिषा ज्योतिरानशान आक्षि ॥

(तैत्तिरीयारण्यके २-३-७)

# उपोद्घातः ।

॥ ओम् ॥

॥ श्रियै नमः ॥

नुमः समस्तकल्याणगुणस्तोममहार्णवम् ।
सर्वकर्मसमाराध्यं सर्वदा श्रीनिकेतनम् ॥

इह खलु सर्वेषामपि चेतनानां प्रवृद्धसंसृतितरुबीजभूताहंकार-ममकाराभिधदोषद्वयहेतुकैः, अविद्या - कर्म - वासना - रुचि - प्रकृतिसंबन्ध-रूपैः संसृतिचक्रावयवैरनवरतं भ्राम्यमाणानामतएव अनादिकर्मप्रवाहबला-यातावर्जनीयदेवादिचतुर्विधशरीरप्रवेशकृताध्यात्मिकादिनानाविधदुःखसागर-निमग्नानाम्, एवंभूतस्य भवपयोनिधेः परं पारमजानानानां हेयोपादेयवि-भागज्ञानपूर्वकेष्टानिष्टप्राप्तिपरिहारेप्सूनां तत्तदभिलषिततत्तत्पुरुषार्थतत्साधन-याथात्म्यावगमसौकर्याय श्रियःपतिरवाप्तसमस्तकामः समस्तकल्याण-गुणात्मकः परमकारुणिकः परब्रह्माभिधानः पुरुषोत्तमो भगवान्नारायणः पुंस्पर्शक्लेशसंभावनागन्धविधुरं नित्यनिर्दोषमलौकिकार्थावबोधनविचक्षणं साधकबाधकप्रमाणान्तरागोचरार्थावगमकतया स्वतःप्रामाण्यविभूषितं वेदा-ख्यमपौरुषेयं ग्रन्थराशिं सर्गादौ स्वनाभिकमलोत्पन्नाय गतकल्पीयोच्चारण-क्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा मात्रामात्रमप्यनन्यथयं श्रुतु-र्मुखायोपदिदेश। तथा च श्वेताश्वतरे श्रूयते—

“ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ” इति ।

हंसोऽयं तावता चापरितृप्यन् मुहुर्मुहुः कृपया प्रेर्यमाणो दुर्बोधवेदार्थविश-दीकरणाय मुनिजनमनोऽम्बुजेष्वाविश्याविश्य स्मृतीतिहासपुराणैः सांप्रदा-

यिकार्थाविस्मरणमविच्छिन्नं प्रवर्तयामास। तदेवं प्रवर्तितेन प्रमाणप्रदीपेन तमो निरस्य सदसद्विवेचनपूर्वकं केषुचिज्जन्मान्तरसहस्रानुष्ठिततपोध्यानसमाधिक्षीणकल्मषतया समुत्पन्नभगवद्भक्तिसमुल्लसितेषु धन्येषु "वेदैश्च सर्वैरहमेव वेद्यः" "सर्वे वेदा यत्पदमामनन्ति" इति सर्वप्रमाणप्रमेयभूतं तमेव परमपुरुषं स्वरूपरूपगुणविभूत्यादिप्रकारिणमनुभूय कृतार्थतामधिगच्छत्सु, अधन्याः केचन गर्भनिर्भाग्याश्चपलबुद्धयस्तमोगुणविमोहिततया प्रचुरतरनिःसारविपरीतार्थकल्पनेन प्रमाणप्रदीपनिर्वापणसमुद्युक्ताः शलभा इव तत्रैव निपत्य स्वात्मविनाशमप्यविजानन्तो मुह्यन्ति। यथाऽऽहुः—

"हर्तुं तमः सदसती च विवेक्तुमीशो
मानं प्रदीपमिव कारुणिको ददाति।
तेनावलोक्य कृतिनः परिभुञ्जते तं
तत्रैव केऽपि चपलाः शलभीभवन्ति ॥" इति।

तामिमामेषां दुर्गतिमनुसंधाय पुनः करुणयोच्छृङ्खलया सुदूरमाकृष्यमाणः शास्त्रपाणिना तानेतान् दुःखसागरनिमग्नानुद्दिधीर्षुः—

"प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः।
प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च ॥
वदन्ति सकला वेदाः सेतिहासपुराणकाः।
मुनयश्च महात्मानो वेदवेदान्तवेदिनः ॥"

इत्यादिप्रमाणप्रतिपन्नस्वस्वरूपाद्यर्थपञ्चकरूपं परमरहस्यार्थं प्रचिकटयिषुः श्रुतिमूर्ध्नि प्रसिद्धः स सर्वज्ञो भगवान्वासुदेवः संसारदावानलदन्दह्यमाननिखिलचेतनदुःखनिर्वापणपरमभेषजभूतस्वाराधनादिपञ्चकालक्रियाकलापयाथात्म्यप्रतिपादकं, प्रसक्तानुप्रसक्ततया तत्तदपेक्षितधर्मादिनिखिलपुरुषार्थतत्साधनादिकृत्स्नार्थावबोधकत्वेन सकलशास्त्रान्तरमूलभूतं, श्रुतिशिरोनिगूढतत्त्वस्वरूपरूपगुणविभूत्यादिविशदीकरणधुरीणतया श्रुतिवदेवाप्र-

कम्पनीयनिरपेक्षप्रामाण्यप्रकर्षं, पञ्चरात्राख्यं महाशास्त्रं स्मृतीतिहासादाविव सद्वारकतां परिहायाद्वारकं स्वयमेव प्रणिनाय ।

उपपादयिष्यते चैतदत्रैवैकादशेऽध्याये—

“ सदागममयात्तस्मात्केवलाद्दिव्यशासनात् ।
निर्ममे सारमुद्धृत्य स्वयं विष्णुरसंकुलम् ॥
तत्परव्यूहविभवस्वभावादिनिरूपणम् ।
पञ्चरात्राह्वयं तन्त्रं मोक्षैकफललक्षणम् ॥ ” इति ।

तदिदं तन्त्रं तत्तत्कालेषु तत्तदध्येतृपुरुषबुद्धितारतम्यानुगुणं संग्रह-विस्तररूपेण तैस्तैर्महर्षिभिः स्वस्वशिष्येभ्यः कृतप्रवचनतया तत्तन्नाम्ना व्यपदिश्यमानमपि न परमपुरुषकर्तृकतां व्यभिचरति । न हि काठकादि-समाख्यया वेदस्यापौरुषेयता प्रतिबध्यते । अनितरसाधारणप्रवचनमूलकत्वेनैव समाख्याया उपपत्तेः । यदाह भगवाञ्जैमिनिः “ आख्या प्रवचनात् ” इति ।

एवं संसारिचेतनोद्दिधीर्षया प्रवर्तितेषु नानातन्त्रेष्वन्यतममिदं प्रकृतं तन्त्रं ; यस्याहिर्बुध्न्यनाम्ना व्यवहारः ।

ननु कोऽयमहिर्बुध्न्यो नाम ? उच्यते । यः खल्वेकादशरुद्राणामन्य-तमत्वेन पुराणेषु परिगण्यमानः, “ अहिर्वै बुध्नियोऽकामयत । इमां प्रतिष्ठां विन्देयेति । स एतमहये बुध्नियाय प्रोष्ठपदेभ्यः पुरोडाशं भूमिकपालं निरवपत् । ततो वै स इमां प्रतिष्ठामविन्दत ” “ महादेवः सर्वमेधे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव ” इत्यादिश्रुतिस्मृत्यवगतकर्मानुष्ठान-बलायातप्रतिष्ठादिफलवत्तया बद्धचेतनकोटिमवगाहमानः, वर्षायुतगणघोर-तपश्चर्याप्रसादितसंकर्षणानुग्रहलब्धसत्त्वगुणफलभूतज्ञानप्रकर्षः, सत्त्वगुण-प्रचुरतया भगवद्भक्ताग्रणीरिति सात्त्विकप्रवरैरभिनन्द्यमानः, अतएव “ अहिर्बुध्नियः प्रथमान एति । श्रेष्ठो देवानामुत मानुषाणाम् । तं ब्राह्मणाः सोमपाः सोम्यासः । प्रोष्ठपदासो अभिरक्षन्ति सर्वे ” इत्यादिश्रुतिभिरुद्घु-ष्यमाणमहिमा जेगीयते ।

यद्यपि—

"एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ" ॥

इत्यादिप्रमाणशतैरस्य भगवत्क्रोधजत्वावगमात्, जटाकपालभस्मचर्मास्थ्यादिधारणरूपनिहीनाचारसमाचरणात्, भूतप्रेतपिशाचादितामसप्रमथगणपरिवृतत्वात्, अशुचिदेशनिवासाच्च तमोमयत्वं सुस्पष्टम्;

तथापि नास्यैतत्स्वाभाविकम्। असुरविमोहनार्थं प्रवृत्तस्य भगवतोऽनुल्लङ्घनीयेन नियोगेन मोहशास्त्रप्रवर्तनाय तथाविधनिन्दिताचारस्य स्वस्मिन्नारोपितत्वात्। अत एवैवंभूतजगद्व्यञ्जनरूपस्वव्यापारप्रयुक्तावर्जनीयदुरितसंचयनिर्हरणाय भगवदुपदिष्टं रामषडक्षरमहामन्त्रमविश्रान्तमनुसन्दधानः स्वाश्रितेभ्यश्चोपदिशन् स्वयमन्तर्हृदये मोदत एव।

तदिदं सर्वं संततपरिचिन्तितपाद्मोत्तरखण्डार्थानुभवजनितसंस्कारामोदितचेतसां न परोक्षम्।

एतेन शंकरस्य मोक्षप्रदत्वप्रतिपादनपरः प्रमाणगणो निर्व्यूढः। मोक्षसाधनभूतब्रह्मज्ञानजनकमन्त्रविशेषोपदेष्टृत्वेनैव मोक्षप्रदत्वनिर्वाहात्। स्पष्टं चेदं जाबालश्रुतौ "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति" इति।

यत्तु तत्रैव "अथ हैनं ब्रह्मचारिण ऊचुः। किं जप्यं येनामृतत्वं ब्रूहीति। सहोवाच याज्ञवल्क्यः। शतरुद्रीयेणेति। एतान्येवामृतनामधेयानि" इति शतरुद्रीयजपस्यैव मोक्षसाधनत्वं प्रतीयत इति, तन्न, पूर्वोदाहृतवाक्यविहिततारकब्रह्माख्यसाधनान्तरावरुद्धस्य मोक्षस्य साधनान्तरानाकाङ्क्षतया पुनरनेन साधनान्तरोपदेशायोगात्।

अतश्च उत्पत्तिवाक्यविहितपुरोडाशाद्यवरुद्धे यागे व्रीह्यादिद्रव्यस्य साधनसाधनत्वेन विधानवत् शतरुद्रीयजपस्य रुद्रप्रसादद्वारा साधनसाधनत्वेनैव विधानमवश्याभ्युपगमनीयम्।

ततश्चायं क्रमः—प्रथमं शतरुद्रीयजपः, तेन रुद्रप्रसादसिद्धिः, प्रसन्नेन रुद्रेण तारकब्रह्मोपदेशः, तेन च ब्रह्मज्ञानं, ततः परमपुरुषप्रसादान्मोक्षसिद्धिरिति ।

तदिदं सर्वमगस्त्यसंहितायां सुतीक्ष्णं प्रत्यगस्त्येन महता ग्रन्थसंदर्भेण प्रतिपादितं तत एवावगन्तव्यम् । ग्रन्थविस्तरभयात्तु वचनानि तानि नोदाहियन्ते ।

सर्वथा अहिर्बुध्न्यस्य भगवदाज्ञापरतन्त्रस्य तमोमयत्वस्येच्छापरिकल्पितत्वेऽपि पूर्वोदाहृतश्रुत्यादिबलात्सात्त्विकत्वमेवास्य स्वाभाविकं रूपमिति सत्त्वोत्तरेणानेन नारदव्याजादाविष्कृतं मोक्षफलकं प्रबन्धरत्नं प्रमाणमूर्धन्यतया मुमुक्षूणामुपादेयतमम् ॥

यद्यपि पञ्चरात्रप्रामाण्ये नाथ-यामुन-यतिवर-प्रभृतिभिः सूरिभिः पराक्रान्तत्वान्नास्माकं वक्तव्यं किञ्चिदवशिष्यते । अथापि तत्प्रणीतान् प्रबन्धान् सकृदप्यपरिशीलयद्भिः स्वगोष्ठीसमयमात्रबद्धश्रद्धैरभिनिवेशवशीकृतचेतोभिः कैश्चिदमृते विषबिन्दुमिव ग्रामोपजीव्ये महातटाके स्नुहीखण्डमिव च सर्वजनोपजीव्ये श्रीमति पञ्चरात्रे दोषमारोप्य जगद्व्यामोहनमातन्यत इति तदीयवागाडम्बरैर्लोकस्य व्यामोहो मा प्रसाङ्क्षीदिति व्यामोहप्रशमाय तद्वागाडम्बरस्य बिभीषिकामात्रत्वव्यक्तीकरणाय च किञ्चिदत्र प्रयतामहे । तत्रेयं पूर्वपक्षसरणिः—

यदि सामान्यतः सिद्ध्येत्पञ्चरात्रस्य मानता ।
अहिर्बुध्न्यस्य सा युक्ता विशेषाद्वदितुं पुनः ॥
दुर्घटं पञ्चरात्रस्य मानत्वं तद्यथोच्यते ।
उत्पत्त्यसंभवात्कर्तुः करणस्याप्यसंभवात् ॥
अर्थविप्रतिषेधाच्च वेदनिन्दादिकीर्तनात् ।
तथा गुणगुणित्वादिविरुद्धार्थप्रकल्पनात् ॥

सूत्रकारेण तन्त्रस्य प्रतिषिद्धा प्रमाणता ।
अथैवं सति तन्त्रस्य प्रकृतस्यात्र का कथा ॥

श्रुतिविरुद्धायाः स्मृतेरप्रामाण्यं हि विरोधाधिकरणन्यायसिद्धम् । श्रुतिविरुद्धं चेदं तन्त्रम् । "न जायते" इत्यादिश्रुतिभिर्जीवनित्यत्वावगमेऽपि "संकर्षणो नाम जीवो जायते" इति जीवोत्पत्तेरत्र प्रतिपादनात् । उत्पत्तावभ्युपगम्यमानायां हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन् । सूत्रकारोऽपि हि "नात्मा श्रुतेः" इति जीवस्योत्पत्तिं प्रतिषेधति ।

तथा "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।" इत्यादिश्रुतिभिः परमात्मनो मनउत्पत्तिः प्रमिता । अत्र तु "संकर्षणात्प्रद्युम्नसंज्ञं मनो जायते" इति जीवात्तदुत्पत्तिः । नचैतदुपपद्यते, विरोधादेव ।

तथा "चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान्" इति वेदनिन्दासंकीर्तनाद्वेदार्थविप्रतिषेधश्चास्मिन्नुपलभ्यते ।

तथा ज्ञानैश्वर्यशक्तिवीर्यबलतेजसां गुणानाम् "आत्मान एवैते भगवन्तो वासुदेवाः" इति गुणित्वकल्पनेन विरुद्धार्थप्रकल्पनबहुलं चेदम् ।

अतः पञ्चरात्रसामान्यस्यैव प्रतिषिद्धे सूत्रकारेण प्रामाण्ये "तत्सामान्यादितरेषु तथात्वम्" इति न्यायेन प्रकृतस्यापि च तन्त्रस्य दुर्घटं प्रमाण्यमिति ।

अत्रोच्यते—

जीवोत्पत्त्यादिवचनं प्रामाण्यं न विघातयेत् ।
श्रुतावपि हि तत्सत्त्वादप्रामाण्यं प्रसज्यते ॥
श्रुतावेव तदुत्पत्तिप्रतिषेधान्मुहुर्मुहुः ।
नाप्रामाण्यं श्रुतेरित्थं मन्यसे तर्हि तुल्यता ॥
वस्तुतस्त्विह कुत्रापि न जीवोत्पत्तिरीरिता ।
षाड्गुण्यपरिपूर्णस्य वासुदेवस्य शार्ङ्गिणः ॥

स्वसमाश्रितरक्षार्थं वात्सल्यजलधेरिह ।
संकर्षणादिरूपेण चतुर्धा व्यूह्य तिष्ठतः ॥
इच्छागृहीताभिमतशरीरत्वं हि कथ्यते ।
एतेन कर्तुः करणासंभवोऽपि निराकृतः ॥
वेदनिन्दादिकथनादमानत्वं यदीरितम् ।
श्रुत्यादिज्ञानवैधुर्यमपराध्यति तत्र ते ॥
अतः श्रुतिविरुद्धत्वहेतुर्यः कथितस्त्वया ।
स्वरूपासिद्ध एवायं कथं स्वाभीष्टसिद्धिकृत् ॥
आस्तां श्रुत्यविरुद्धत्वं प्रत्युतात्यन्तमेव तु ।
श्रुत्यानुगुण्यात्तन्त्रस्य कथं त्याज्यत्वमिष्यताम् ॥
अजायमानो बहुधा विजायत इति श्रुतेः ।
अत्यन्तानुगुणे तन्त्रे कथं ते कलिला मतिः ॥

यदि नामावश्यं जीवोत्पत्तिकथनमप्रामाण्यमापादयतीति मतं, हन्त तर्हि "तोयेन जीवान्व्यससर्ज भूम्याम्" "प्रजापतिः प्रजा असृजत" "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" "यतो वा इमानि भूतानि जायन्ते" इत्यादिभिर्जीवोत्पत्तिप्रतिपादनाच्छ्रुतावप्यप्रामाण्यमापाद्यमानं कथमायुष्मान् परिहरतु ।

अथ मन्यसे—"न जायते म्रियते" "ज्ञाज्ञौ द्वावजौ" इत्यादि-श्रुतिभिरेवान्यत्र जीवोत्पत्तिप्रतिषेधात्, "नित्यो नित्यानां" "अजो नित्यः" इत्यादिभिर्जीवनित्यत्वप्रतिपादनाच्चोत्पत्तिवादिन्यः श्रुतयोऽन्यथा नेया इति ।

एवं तर्हि "स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ।" इत्येवं सर्वास्वपि संहितासु जीवस्य नित्यत्वप्रतिपादनाज्जीवस्वरूपोत्पत्तिः पञ्चरात्र-तन्त्रे प्रतिषिद्धैवेति जीवोत्पत्तिवादिवाक्यानामन्यथा नेयत्वं तुल्यं किमिति न पश्यसि ।

वस्तुतस्तु—उदाहृतवाक्येऽपि वासुदेवाख्यं परं ब्रह्मैवाश्रितवत्सलतया स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया स्वात्मानं संकर्षणादिरूपेण चतुर्धा विभज्यावतिष्ठत इति प्रतिपादयितुं जीवाद्यभिमानिसंकर्षणादिरूपेण परमपुरुषस्य शरीरविशेषपरिग्रहः प्रतिपाद्यते न जीवोत्पत्तिरिति पञ्चरात्रसिद्धान्तमजानतामेवेदं चोद्यं यज्जीवोत्पत्तिर्वेदविरुद्धा प्रतिपाद्यत इति ।

एतेन कर्तुः करणासंभवोऽपि प्रत्युक्तः, संकर्षणस्य परमात्मनोऽनन्यत्वे सति तस्मादुत्पद्यमानं मनः परमात्मन एवोत्पद्यमानं भवतीति श्रुतिविरोधगन्धाभावात् ।

यच्चोक्तं वेदनिन्दावचनाद्वेदार्थविप्रतिषेध इति, तदिदं वेद-तदुपबृंहण-न्याय-स्वरूपानभिज्ञाननिबन्धनम् । वेदेऽपि हि वेदनिन्दा प्रतीयते । यथा उदितहोमे अनुदितहोमनिन्दा, यथा वा भूमविद्यायां तद्व्यतिरिक्तविद्यानिन्दा ।

अत्र हि नहिनिन्दान्यायादुदितहोमप्रशंसार्थाऽनुदितहोमनिन्देति, वक्ष्यमाणभूमविद्याप्रशंसार्था तदितरविद्यानिन्देति च न्यायविदो मन्यन्ते । एवमत्रापि पञ्चरात्रप्रशंसार्था तदितरनिन्देति किं नाभिप्रैषि ।

वस्तुतस्तु नात्र वेदनिन्दाप्रतीतिः । भूमविद्यायामपि यथा साङ्गवेदप्रतिपाद्यपरतत्त्वालाभनिमित्तको नारदस्य शब्दराशिमात्रपरिज्ञानवादः, एवमत्रापि शाण्डिल्यस्येति क्व वेदनिन्दाप्रतीतिः । यदि वेदनिन्दैवावश्यं विवक्ष्येत, ततो वेदासंमत एवार्थः स्वस्मिन् प्रतिपाद्येत, न वेदानुयाय्यर्थः । न हि वेदं निन्दन् वेदार्थमेव स्वयं प्रतिपादयन् कुत्रचिद्दृष्टश्रुतचरः । वेदानुयाय्येव चार्थः स्पष्टमत्र विशदीक्रियते । भूमविद्यायामिवात्रापि वेदान्तवेद्यस्यैव वासुदेवाख्यस्य तत्त्वस्योपदिष्टतया शाण्डिल्येन तस्यैवानेन शास्त्रेण परिज्ञानात् ।

अतोऽप्रामाण्यसाधकत्वेनोपन्यस्तस्य श्रुतिविरुद्धत्वहेतोः स्वरूपासिद्धत्वान्न सिषाधयिषिताप्रामाण्यसिद्धिः ।

किंच—न केवलं श्रुत्यविरुद्धत्वम्; प्रत्युत “ अजायमानो बहुधा विजायते ” इतिश्रुतिसिद्धाश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहसंग्रहरूपजन्मप्रकाशकत्वान्नितरां श्रुत्यानुगुण्यमिति श्रुत्यर्थयाथार्थ्यजिज्ञासुभिः सिद्धमवश्योपजीव्यत्वं पञ्चरात्रस्य ।

आकाशप्राणादिशब्दैर्ब्रह्माभिधानमिव जीवमनोऽहंकारशब्दैः संकर्षणप्रद्युम्नानिरुद्धाभिधानं तेषां जीवादितत्त्वाधिष्ठातृत्वादुपपन्नम् ।

यच्चोक्तम्—गुणगुणित्वादिकल्पनाद्विप्रतिषेध इति, तत्तु स्वाज्ञानविजृम्भितम्; पञ्चरात्रेषु कुत्रापि ज्ञानबलैश्वर्यादिगुणानां गुणित्वानभ्युपगमात् । यत्रापि च ज्ञानादिशब्दानां ब्रह्मवाचकशब्दसामानाधिकरण्यं तत्रापि तद्गुणसारत्वात्तद्व्यपदेशोपपत्तेर्न गुणित्वकल्पना । इतरथा “ यः सर्वज्ञः सर्ववित् ” “ सत्यं ज्ञानमनन्तं ब्रह्म ” इतिश्रुतेरप्यप्रामाण्यप्रसंगात् ।

यदप्युक्तम्—सूत्रकारेणापि पञ्चरात्रप्रामाण्यं प्रतिषिध्यत इति, तदिदमाशामात्रमतिसाहसं च । वेदार्थमुपबृंहयता बादरायणेन मोक्षधर्मे विंशत्याऽध्यायैः, आश्वमेधिके त्रयोविंशत्याऽध्यायैश्च पञ्चरात्रप्रामाण्यं प्रख्यापितवता शारीरके कथं तदप्रामाण्यं प्रतिपाद्येत ।

मोक्षधर्माश्वमेधिकयोरेतावती तु भिदा—मोक्षधर्मे बह्वीभिरुपपत्तिभिः पञ्चरात्रप्रामाण्यं प्राधान्येन प्रतिपिपादयिषुः प्रमेयशरीरं संचिक्षेप । आश्वमेधिके तु पूर्वप्रसाधितं प्रामाण्यं संक्षेपत उपजीव्यत्वेनानूद्य निखिलधर्मरहस्यरूपं पञ्चरात्रप्रमेयशरीरं वितस्तारेति ।

इयं हि शास्त्रकाराणां शैली—यत् प्रमाणत्वेनाभिमतस्य ग्रन्थस्य प्रामाण्यप्रकारमेव प्रथमं सुनिरूप्य ततः प्रमेयशरीरनिरूपणम् । अतएव खलु भगवता जैमिनिनाऽपि पूर्वतन्त्रे विध्यर्थवादमन्त्रनामधेयस्मृत्याचारवाक्यशेषसामर्थ्यानां धर्मप्रमाणानां प्रामाण्यमेव प्रथमेऽध्याये संसाध्य द्वितीयाद्यध्यायेषु प्रमेयशरीरं निरूपितम् । अतः सूत्रकारेण पञ्चरात्रप्रामाण्यं प्रतिषिध्यत इत्येतदुत्स्वप्नायितम् ।

बादरायण आचार्यः पञ्चमं वेदमुद्गिरन् ।
महता च प्रबन्धेन मोक्षधर्मे बहुक्रमैः ॥
पञ्चरात्रस्य कृत्स्नस्य प्रामाण्यं प्रत्यपीपदत् ।
स कथं ब्रह्मसूत्रेषु सूत्रयेदप्रमाणताम् ॥
गुरुचित्तानभिज्ञैर्यदप्रामाण्यप्रजल्पनम् ।
गुरुद्रोहित्वमेतेषां जनयेत्तद्दुरुद्धरम् ॥
सूत्रकारस्य संशून्यहृदयत्वावहं मतम् ।
जल्पितं भ्रान्तहृदयैः को हि नामाध्यवस्यति ॥

गुरुद्रोहित्वादिप्रपञ्चनं तु असत्कृते मानरत्ने निपुणं प्रदर्शितं तत एवावगन्तव्यम् ।

अत्रायं मोक्षधर्मीयवचनसंदर्भनिर्गलितानां भगवद्वासुदेवमुखविनिःसृतपाञ्चरात्रनिरतिशयवैभवाविष्कारकाणामर्थात्तत्प्रामाण्यप्रसाधकानां संग्रहो हेतूनाम्—

[1] पञ्चरात्रस्य बहुमुखं प्रामाण्यं प्रतिपिपादयिषुणा भगवता व्यासेन समनुगृहीते भीष्मयुधिष्ठिरसंवादरूपे मोक्षधर्मीयग्रन्थसंदर्भविशेषे युधिष्ठिर-

---

1 महाभारते शान्तिपर्वणि मोक्षधर्मे द्विचत्वारिंशदधिकत्रिशततमेऽध्याये—(अत्राध्यायानां श्लोकानां च संख्या—१९०७ तमे खिस्ताब्दे निर्णयसागरमुद्रालयमुद्रितशान्तिपर्वपुस्तकानुसारेण द्रष्टव्या)

युधिष्ठिर उवाच—

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥ ३४२ १
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं परम् ।
विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च ॥ ,, २
मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्याद्येन न च्यवते दिवः ॥ ,, ३
देवतानां च को देवः पितॄणां च पिता तथा ।
तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ॥ ,, ४

पृष्टार्थस्य परमरहस्यत्वस्य दुरवबोधत्वस्यायोग्येष्ववक्तव्यत्वस्य च कुरुवृद्धेन भीष्मेण प्रदर्शितत्वात् ।

[1] लोकहिताय प्रवृत्ततया बाह्यागमव्यावृत्तत्वप्रदर्शनात् ।

[2] योग्यजनभूयिष्ठकालप्रवृत्तत्वतदितरकालतिरोहितत्वाभ्यां वैलक्षण्यातिशयाविष्करणात् ।

[3] आविर्भावतिरोभावमात्रकथनेनार्थशरीरस्य वेदार्थवदनादित्वस्य व्यञ्जिततया नितरां बाह्यागमेभ्यो व्यावृत्तत्वस्फोरणात् ।

[4] सर्वमर्यादास्थापकमुनिजनभूयिष्ठमेरुपृष्ठप्रवृत्ततया विलक्षणदेशप्रवृत्तत्वोत्कीर्तनात् ।

---

भीष्म उवाच—

गूढं मां प्रश्नविद्राजन्पृच्छसे त्वमिहानघ ।
न ह्येतत्तर्कया शक्यं वक्तुं वर्षशतैरपि ॥ ३४२ ५
ऋते देवप्रसादाद्वै राजन् ज्ञानागमेन वा ।
गहनं ह्येतदाख्यानमाख्यातव्यं तवारिहन् ॥ ,, ६

श्रीभगवानुवाच—

अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम् ।
तव भक्तिमतो ब्रह्मन्वक्ष्यामि तु यथातथम् ॥ ,, २९
1 तेनैषा प्रथिता ब्रह्मन्मर्यादा लोकभाविनी ।
दैवं पित्र्यं च कर्तव्यमिति तस्यानुशासनम् ॥ ,, ३५
2-3 तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक् समभवन्मनो दुष्टं च नाभवत् ।
न च कायेन कृतवान्स पापं परमाण्वपि ॥ ३४३ २७
संस्थिते तु नृपे तस्मिञ्छास्त्रमेतत्सनातनम् ।
अन्तर्धास्यति तत्सर्वमेतद्वः कथितं मया ॥ ,, ५२
उत्पद्यन्ते व्यथन्ते च यान्यतोऽन्यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥
4 वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ॥ ,, २९

[1] पञ्चरात्रप्रवर्तकानामृषीणां चित्तैकाग्र्येन्द्रियजयादिबहुगुणवत्त्वस्य तपोमहिमवत्त्वस्य भगवत्प्रसादलब्धसरस्वतीकत्वस्य बहूनामैकमत्यस्य च दर्शिततया विलक्षणप्रवर्तकप्रवर्तितत्वावगमात् ।

[2] प्रकृष्टदेवर्षिपरिग्रहप्रकृष्टशिष्याधिगमाभ्यां विलक्षणवक्तृश्रोतृकत्व-व्यक्तीकरणात् ।

[3] निखिलवेदवेदान्तसारत्वस्य गुडजिह्विकान्यायेन त्रिवर्गप्रतिपादक-त्वस्य मोक्षैकपरत्वस्यानुत्तमहितत्वस्य च प्रतिपादिततया विलक्षणप्रबन्धत्वा-वगमात् ।

---

1 एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः ॥ ३४३ ३२
आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं वै सर्वे ते मुनयः समम् ॥ ,, ३५
नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेश तानृषीन् सर्वांल्लोकानां हितकाम्यया ॥ ,, ३६
ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥ ,, २८
2 उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥ ,, ४६
युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ॥ ,, ४८
3 वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ॥ ,, २९
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥ ३४८ ६२
नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः ।
ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम् ॥ ,, ६३
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
लोकान् संचिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥ ३४३ ३३
अत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥ ,, ३४

[1] इतरप्रबन्धप्रामाण्ये दृष्टान्तीकृतत्वात् ।

[2] मुक्तकण्ठं भगवन्नियमितप्रमाणभावत्वात् ।

[3] अव्यवधानेन भगवदनुशासनरूपत्वात् ।

[4] धर्मतन्त्रप्रवर्तकमन्वादिनिखिलमुनिजनोपजीव्यत्वात् ।

[5] पञ्चरात्रनिष्ठस्योपरिचरस्य राज्ञोऽश्वमेधकर्तृत्ववचनाद्वैदिकानां पञ्चरात्रोक्तानां च कर्मणां कर्तृसामान्यावगमेन "अपिवा कर्तृसामान्यात्" इतिन्यायानुगृहीतत्वात् ।

[6] तेषामेव द्विविधानां कर्मणामव्यवधानेनाराध्यपरदेवतासामान्यप्रदर्शनेन संप्रतिपन्नदेवताकत्वावगमात् ।

[7] सर्वदेवतासाक्षात्कारिबृहस्पत्यदृश्यस्य भगवतः पञ्चरात्रनिष्ठोपरिचरदृश्यत्वप्रतिपादनेन विलक्षणाधिकारिकतया प्रतिपन्नत्वात् ।

---

| | | | |
|---|---|---|---|
| 1-4 | सर्वे प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमम् ।<br>भविष्यति प्रमाणं वा एतन्मदनुशासनम् ।<br>अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ॥ | ३४३ | ४५ |
| 5 | तस्य यज्ञो महानासीदश्वमेधो महात्मनः ।<br>बृहस्पतिरुपाध्यायस्तस्य होता बभूव ह ॥ | ३४४ | ५ |
| 6 | प्रीतस्ततोऽस्य भगवान्देवदेवः पुरातनः ।<br>साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित् ॥ | ,, | १२ |
| 7 | स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान् ।<br>अदृश्येन हृतो भागो देवेन हरिमेधसा ॥ | ,, | १३ |
| | बृहस्पतिस्ततः क्रुद्धः स्रुचमुद्यम्य वेगितः ।<br>आकाशं घ्नन् स्रुचः पातै रोषादश्रूण्यवर्तयत् ॥ | ,, | १४ |
| | उवाच चोपरिचरं मया भागोऽयमुद्यतः ।<br>ग्राह्यः स्वयं हि देवेन मत्प्रत्यक्षं न संशयः ॥ | ,, | १५ |
| | उद्यता यज्ञभागा हि साक्षात्प्राप्ताः सुरैरिह ।<br>किमर्थमिह न प्राप्तो दर्शनं मे हरिर्नृप ॥ | ,, | १६ |

[1] एकतद्वितत्रितवृत्तान्तमुखेन षड्विधतात्पर्यलिङ्गेष्वर्थवादरूपतात्पर्यलिङ्गवत्त्वज्ञापनात् ।

---

भीष्म उवाच—

ततस्स तं समुद्भूतं भूमिपालो महान्वसुः ।
प्रसादयामास मुनिं सदस्यास्ते च सर्वशः ॥ ३४४ १७

हुता त्वयाऽवदानीह पुरोडाशस्य यावती ।
गृहीता देवदेवेन मत्प्रत्यक्षं न संशयः ॥ ,, १८

इत्येवमुक्ते वसुना सरोषश्चाब्रवीद्गुरुः ।
न यजेयमहं चात्र परिभूतस्त्वया नृप ॥ ,, १९

त्वया पशुर्वारितश्च कृतः पिष्टमयः पशुः ।
त्वं देवं पश्यसे नित्यं न पश्येयमहं कथम् ॥ ,, २०

वसुरुवाच—

पशुहिंसा वारिता च यजुर्वेदादिमन्त्रतः ।
अहं न वारये हिंसां द्रक्ष्याम्यैकान्तिको हरिम् ।
तस्मात्कोपो न कर्तव्यो भवता गुरुणा मयि ॥ ,, २१

वसुमेवं ब्रुवाणं तु क्रुद्ध एव बृहस्पतिः ।
उवाच ऋत्विजश्चैव किं नः कर्मेति वारयन् ॥ ,, २२

1 प्रजापतिसुताश्चात्र सदस्याश्चाभवंस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥ ,, ६

अथैकतो द्वितश्चैव त्रितश्चैव महर्षयः ।
ऊचुश्चैनमसंभ्रान्ता न रोषं कर्तुमर्हसि ॥ ,, २३

शृणु त्वं वचनं पुत्र अस्माभिः समुदाहृतम् ।
नैष धर्मः कृतयुगे यत्त्वं रोषमिहाकृथाः ॥ ,, २४

अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः ।
न शक्यस्स त्वया द्रष्टुमस्माभिर्वा बृहस्पते ।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ ,, २५

वयं हि ब्रह्मणः पुत्रा मानसाः परिकीर्तिताः ।
गता निःश्रेयसार्थं हि कदाचिद्दिशमुत्तराम् ॥ ,, २६

तप्त्वा वर्षसहस्राणि चत्वारि तप उत्तमम् ।
एकपादाः स्थिताः सम्यक्काष्ठभूताः समाहिताः ॥ ,, २७

मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः ।
स देशो यत्र नस्तप्तं तपः परमदारुणम् ॥ ३४४ २८
वरेण्यं वरदं तं वै देवदेवं सनातनम् ।
कथं पश्येमहि वयं देवं नारायणं त्विति ॥ ,, २९
अथ व्रतस्यावभृथे वागुवाचाशरीरिणी ।
स्निग्धगम्भीरया वाचा प्रहर्षणकरी विभो ॥ ,, ३०
सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना ।
यूयं जिज्ञासवोऽभक्ताः कथं द्रक्ष्यथ तं विभुम् ॥ ,, ३१
क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः ।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥ ,, ३२
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् ।
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥ ,, ३३
अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ।
गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः ॥ ,, ३४
अथ श्रुत्वा वयं सर्वे वाचं तामशरीरिणीम् ।
यथाऽऽख्यातेन मार्गेण तं देशं प्रविशेमहि ॥ ,, ३५
प्राप्य श्वेतं महाद्वीपं तच्चित्तास्तद्दिदृक्षवः ।
सहसा हि गताः सर्वे तेजसा तस्य मोहिताः ॥ ,, ३६
ततोऽस्मद्दृष्टिविषयस्तदा प्रतिहतोऽभवत् ।
न च पश्याम पुरुषं तत्तेजोहृतदर्शनाः ॥ ,, ३७
ततो नः प्रादुरभवद्विज्ञानं देवयोगजम् ।
न किलातप्ततपसा शक्यते द्रष्टुमञ्जसा ॥ ,, ३८
ततः पुनर्वर्षशतं तप्त्वा तात्कालिकं महत् ।
व्रतावसाने च शुभान्नरान्ददृशिमो वयम् ॥ ,, ३९
श्वेतांश्चन्द्रप्रतीकाशान् सर्वलक्षणलक्षितान् ।
नित्याञ्जलिकृतान् ब्रह्म जपतः प्रागुदङ्मुखान् ॥ ,, ४०
मानसो नाम स जपो जप्यते तैर्महात्मभिः ।
तेनैकाग्रमनस्त्वेन प्रीतो भवति वै हरिः ॥ ,, ४१
याऽभवन्मुनिशार्दूल भाः सूर्यस्य युगक्षये ।
एकैकस्य प्रभा तादृक् साऽभवन्मानवस्य ह ॥ ,, ४२

तेजोनिवासः स द्वीप इति वै मेनिरे वयम् ।
न तत्राभ्यधिकः कश्चित्सर्वे ते समतेजसः ॥ ३४४ ४३
अथ सूर्यसहस्रस्य प्रभां युगपदुत्थिताम् ।
सहसा दृष्टवन्तः स्म पुनरेव बृहस्पते ॥ ,, ४४
सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतम् ।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः ॥ ,, ४५
ततो हि वदतां तेषामश्रौष्म विपुलं ध्वनिम् ।
बलिः किलोपह्रियते तस्य देवस्य तैर्नरैः ॥ ,, ४६
वयं तु तेजसा तस्य सहसा हृतचेतसः ।
न किंचिदपि पश्यामो हतचक्षुर्बलेन्द्रियाः ॥ ,, ४७
एकस्तु शब्दो विततः श्रुतोऽस्माभिरुदीरितः ।
आकाशं पूरयन् सर्वं शिक्षाक्षरसमन्वितः ॥ ,, ४८
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ।
इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमन्वितः ॥ ,, ४९
एतस्मिन्नन्तरे वायुः सर्वगन्धवहः शुचिः ।
दिव्यान्युवाह पुष्पाणि कर्मण्याश्चौषधीस्तथा ॥ ,, ५०
तैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः ।
भक्त्या परमया युक्तैर्मनोवाक्कर्मभिस्तदा ॥ ,, ५१
नूनं तत्रागतो देवो यथा तैर्वागुदीरिता ।
वयं त्वेनं न पश्यामो मोहितास्तस्य मायया ॥ ,, ५२
मारुते संनिवृत्ते च बलौ च प्रतिपादिते ।
चिन्ताव्याकुलितात्मानो जाताः स्मोऽङ्गिरसां वर ॥ ,, ५३
पुरुषाणां सहस्रेषु तेषु वै शुद्धयोनिषु ।
अस्मान्न कश्चिन्मनसा चक्षुषा वाऽप्यपूजयत् ॥ ,, ५४
तेऽपि स्वस्था मुनिगणा एकभावमनुव्रताः ।
नास्मासु दधिरे भावं ब्रह्मभावमनुष्ठिताः ॥ ,, ५५
ततोऽस्मान्सुपरिश्रान्तांस्तपसा चातिकर्शितान् ।
उवाच खस्थं किमपि भूतं तत्राशरीरकम् ॥ ,, ५६

देव उवाच—

दृष्टा वः पुरुषाः श्वेताः सर्वेन्द्रियविवर्जिताः ।
दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमाः ॥ ,, ५७

[1] पञ्चरात्रविहितभगवद्धर्मनिष्ठपुरुषाध्युषितदेशस्य परमप्राप्यत्व-बहुतपोलभ्यत्वयोः, धर्मान्तरनिष्ठैस्तद्धर्मनिष्ठानां दुर्दर्शत्वबहुतपोदृश्यत्वयोः, तेषामितराधिकारिषु शून्यादरत्वस्य, तन्मुखेनेतराधिकारिनिकृष्टत्वभगवद्धर्म-निष्ठप्रकृष्टत्वयोः, भगवता स्वयमागत्य दर्शनप्रदानात्तेषां महत्त्वस्य, भगवत्स्तोत्रश्रवणस्यापि तपःसाध्यतया भगवद्धर्मप्रकर्षस्य च प्रज्ञापिततया विलक्षणपुरुषानुष्ठीयमाननिरतिशयभोग्यभूतविलक्षणधर्मप्रतिपादकत्वात् ।

---

| | | |
|---|---|---|
| गच्छध्वं मुनयः सर्वे यथागतमितोऽचिरात् । | | |
| न स शक्यस्त्वभक्तेन द्रष्टुं देवः कथंचन ॥ | ३४४ | ५८ |
| कामं कालेन महता एकान्तित्वमुपागतैः । | | |
| शक्यो द्रष्टुं स भगवान्प्रभामण्डलदुर्दृशः ॥ | ,, | ५९ |
| महत्कार्यं च कर्तव्यं युष्माभिर्द्विजसत्तमाः । | | |
| इतः कृतयुगेऽतीते विपर्यासं गतेऽपि च ॥ | ,, | ६० |
| वैवस्वतेऽन्तरे विप्राः प्राप्ते त्रेतायुगे पुनः । | | |
| सुराणां कार्यसिद्ध्यर्थं सहाया वै भविष्यथ ॥ | ,, | ६१ |
| ततस्तदद्भुतं वाक्यं निशम्यैवामृतोपमम् । | | |
| तस्य प्रसादात्प्राप्ताः स्मो देशमीप्सितमञ्जसा ॥ | ,, | ६२ |
| एवं सुतपसा चैव हव्यकव्यैस्तथैव च । | | |
| देवोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि ॥ | ,, | ६३ |
| नारायणो महद्भूतं विश्वसृड्ढव्यकव्यभुक् । | | |
| अनादिनिधनोऽव्यक्तो देवदानवपूजितः ॥ | ,, | ६४ |
| एवमेकतवाक्येन द्वितत्रितमतेन च । | | |
| अनुनीतः सदस्यैश्च बृहस्पतिरुदारधीः ॥ | ,, | ६५ |
| समापयत्ततो यज्ञं दैवतं समपूजयत् । | | |
| समाप्तयज्ञो राजाऽपि प्रजां पालितवान्वसुः ॥ | ,, | ६६ |

1 अत्रापेक्षितानि "मेरोरुत्तरभागे तु" "एकान्तिनस्ते पुरुषाः" "ततोऽस्मद्दृष्टि-विषयः" "व्रतावसाने च शुभान्" "बलिः किलोपह्रियते" पुरुषाणां सहस्रेषु" "एकश्च शब्दोऽविरतः" इतीमानि वचनानि पूर्वमुदाहृतानि ॥

[1] स्वविहितधर्मानुष्ठातॄणां भगवद्दर्शनतुल्यदर्शनत्व-देवर्षिवन्द्यत्व-ब्रह्मादिप्रतियोगिकमहत्त्वादिगुणापादकत्वात् ।

[2] भगवद्धर्मनिष्ठपरिसरे भगवता नारदसंभाषणस्यापि विघ्नरूपताकथनेन नारदादपि तेषामासन्नतरत्वप्रख्यापनात् ।

[3] मोक्षधर्मपरपर्यायस्य भगवद्धर्मस्य दुरनुष्ठानत्व-सनातनत्वैकान्तिधर्मत्व - श्रेष्ठत्व-नारायणप्रियत्व - कृतयुगप्राप्त्यापादकत्व-परममोक्षप्रदत्व-प्रतिपादनमुखेन पञ्चरात्रविहितधर्माधिकारिवैलक्षण्यप्रपञ्चनात् ।

---

| | | | |
|---|---|---|---|
| 1 | दृष्टा वः पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः । | | |
| | दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमः ॥ | ३४४ | ५७ |
| | प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः । | | |
| | ददर्श तानेव नराञ्श्वेतांश्चन्द्रप्रभाञ्शुभान् । | | |
| | पूजयामास शिरसा मनसा तैश्च पूजितः ॥ | ३४६ | १ |
| | न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनम् । | | |
| | यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना ॥ | ३४८ | ५८ |
| 2 | एवं संदर्शयित्वा तु नारदं परमेष्ठिजम् । | | |
| | उवाच मधुरं भूयो गच्छ नारद मा चिरम् ॥ | ३४७ | १८ |
| | इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः । | | |
| | एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति ॥ | ,, | १९ |
| 3 | अहो हि दुरनुष्ठेयो मोक्षधर्मः सनातनः । | | |
| | यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन् ॥ | ३४९ | ९ |
| | नूनमेकान्तिधर्मोऽयं श्रेष्ठो नारायणप्रियः । | ३५८ | ४ |
| | एकान्तिनो हि पुरुषा गच्छन्ति परमं पदं ॥ | ,, | ३ |
| | एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप । | | |
| | यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दन ॥ | ,, | ६२ |
| | अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः । | | |
| | भवेत्कृतयुगप्राप्तिराशीःकर्मविवर्जिता ॥ | ,, | ६३ |
| | एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् । | | |
| | ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥ | ३४४ | ३३ |

[1] वेदवेदान्तवेद्यपरदेवतायाः सर्वस्मात्परत्वेन पञ्चरात्रप्रतिपाद्यत्वावेदनात् ।

[2] पञ्चरात्रविषयकोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गपरिष्करणात् । तदेवं, आशयदोषविरहितत्वात्, विलक्षणदेशकालप्रवृत्तत्वात्, विलक्षणप्रवर्तकप्रवर्त्तितत्वात्, विलक्षणवक्तृश्रोतृकत्वात्, विलक्षणप्रबन्धत्वात्, विलक्षणधर्मप्रतिपादकत्वात्, विलक्षणतत्कर्तृकत्वात्, विलक्षणफलकत्वात्, तत्फलदायिविलक्षणदेवताविषयकत्वाच्च वैलक्षण्यप्रतिपादनमुखेन बहुमुखवैलक्षण्यातिशयः स्थिरीकृत इति सिद्धं भगवच्छास्त्रस्योत्सर्गसिद्धं प्रामाण्यमप्रामाण्यकारणाभावादनपोदितं दुरपह्नवमिति ।

---

यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः ।
एकान्तभावोपगत एकान्ते सुसमाहितः ॥ ३४८ ७९

प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः ।
स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ॥ ,, ८०

1 मया सृष्टः पुरा ब्रह्मा मां यज्ञमयजत्स्वयम् ॥ ३४७ ६१

ततस्तस्मै वरान्प्रीतो ददावहमनुत्तमान् ।
मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च ॥ ,, ६२

एष माता पिता चैव युष्माकं च पितामहः ।
मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः ॥ ३४९ ७६

अस्यैव चात्मजो रुद्रो ललाटाद्यः समुत्थितः ।
ब्रह्मानुशिष्टो भविता सोऽपि सर्ववरप्रदः ॥ ,, ७७

सब्रह्माणः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः ।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम् ॥ इत्यादि ॥

2 "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥"

इत्युक्तेषु षड्विधतात्पर्यलिङ्गेषु "वेदैश्चतुर्भिः समितं" (३४३-२९) इत्युपक्रमः, "इदं महोपनिषदं" (३४८-६२) इत्युपसंहारः, तन्मध्यपतितग्रन्थसंदर्भे अभ्यासादिलिङ्गान्तराणि च द्रष्टव्यानि ॥

[1]तथा—स्वमहिषीं भूमिमुद्दिश्य भगवत्प्रणीते अत एव सात्त्विकत्वेन परिगणिते श्रीमति वाराहे पुराणे मोक्षधर्मानुगुण्येन पञ्चरात्रस्य वेदतुल्यप्रामाण्यप्रतिपादनमुखेन पाशुपताद्यागमान्तरवैलक्षण्यमुपपाद्य वेदाधिकृतत्रैवर्णिकाधिकारत्वं तदितरायोग्यत्वं वेदपञ्चरात्रयोः समुच्चित्य मोक्षसाधनत्वं च सुनिरूप्य तदितरागमानां मोहशास्त्रत्वमुपवर्णितम् ।

यदपि कैश्चिदुक्तं—पञ्चरात्रे त्रयीधर्मपरित्यागस्योक्तत्वात् तदंशे वेदविरोधस्यापरिहरणीयत्वान्न कार्त्स्न्येन वेदाविरुद्धत्वं संभवतीति कार्त्स्न्येन तस्य न प्रामाण्यं युक्तमध्यवसातुमिति, तत्र ते पर्यनुयोज्याः—त्रयीचोदिताग्निहोत्रादिपरित्यागमुखेन चतुर्थाश्रमधर्मप्रतिपादकानां मन्वादिस्मृतीनां तदंशे वेदविरोधस्यापरिहरणीयत्वान्न कार्त्स्न्येन वेदाविरुद्धत्वं संभवतीति कथं तासां कार्त्स्न्येन प्रामाण्यमिति ।

तत्र यदि प्रतिब्रूयुः "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इत्यादिभिः प्रत्यक्षश्रुतिभिरेव चतुर्थाश्रमविधानात्तन्मूलानां स्मृतीनां न वेदविरुद्धत्वमिति ।

---

1 वाराहे (अत्र श्लोकसंख्या अध्यायसंख्या च कलिकाताराजधान्यां गिरिशविद्यारत्नयन्त्रे १८९३ तमे खिस्ताब्दे मुद्रितवराहपुराणपुस्तकानुसारेण द्रष्टव्या) षट्षष्टितमेऽध्याये—

पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् ।
संहिताजपमास्थाय ते मां पश्यन्ति ब्राह्मणाः ॥ ६६ १०
अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि ।
मार्गेण मां प्रपद्यन्ते ते मां पश्यन्ति मानवाः ॥ ,, ११
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति ॥ ,, १२
एवं मयोक्तं विप्रेन्द्र पुरा कल्पे पुरातनम् ।
पञ्चरात्रं सहस्राणां यदि कश्चिद्ग्रहीष्यति ॥ ,, १३
कर्मक्षये च मां कश्चिद्यदि भक्तो भविष्यति ।
तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति ॥ ,, १४
वेदेन पञ्चरात्रेण भक्त्या यज्ञेन तु द्विजाः ।
प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज ॥ ,, १८

तत्र ब्रूयादेतान्—" किं भोः त्रयीधर्मेणासंयुक्त इमं धर्मं जिज्ञासीत ओं भोः जिज्ञासीत " इत्यादिप्रश्नप्रतिवचनरूपप्रत्यक्षश्रुतिसिद्धत्वात्त्रयीचोदितधर्मविशेषत्यागस्य तन्मूलानां पञ्चरात्रवचसां न वेदविरुद्धत्वमिति तुल्यं समाधानमिति पश्यन्तु भवन्त इति ।

अथ निरङ्कुशत्वात्तुण्डस्य यदि नाम पृच्छेयुः—" किं भोः " इत्यादीनां भवदुदाहृतवाक्यानां कथं वेदत्वमिति । पृच्छेदेवैतान्—" यदहरेव " इत्यादीनां त्वदुदाहृतवाक्यानां कथं वेदत्वमिति ।

जाबालश्रुत्यादीनां देशान्तरेष्वधीयमानत्वात् " यदहरेव " इत्यादीनां वेदत्वमिति चेत्समाधानमुद्गृणीयुः । गृह्णीयुरिदमपि तुल्यं समाधानं—जाबालबाष्कलमाध्यन्दिनादिशाखानामिव देशान्तरे बहुभिरविच्छिन्नपारम्पर्यमधीयमानत्वादेषामपि तद्वदेव वेदत्वं सिद्धमिति ।

येनैव स्मर्तव्यत्वे सत्यस्मर्यमाणकर्तृकत्वरूपेण हेतुना " यदहरेव " इत्यादीनामपौरुषेयत्वं सिध्यति, " किं भोः " इत्यादीनामपि स एव हेतुरपौरुषेयत्वं व्यञ्जयतीति पौरुषेयत्वशङ्काऽपि सुदूरोत्सारिता ।

किंच—यथा तैत्तिरीयादिशाखानामसाधारणकल्पसूत्रवत्त्वाद्वेदत्वप्रतिपत्तिः, तथैवैकायनशाखाया अपि कात्यायनादिप्रणीतासाधारणकल्पसूत्रवत्त्वादुरपह्नवा वेदत्वप्रतिपत्तिः ।

अपि च भूमविद्यायाम्—" ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्त्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि " (छा° ७-१-२.) इति श्रवणादृग्वेदादिवदस्या अपि वेदत्वसिद्धिः ।

न च वाच्यम्—ऋगादिभ्यः पृथग्ग्रहणादवेदभूतेतिहासपुराणादिव्यवधानाच्चैकायनस्यावेदत्वमिति । ब्राह्मणपरिव्राजकन्यायेन श्रैष्ठ्यादेकायनस्य

पृथक्संकीर्तनोपपत्त्या पृथग्ग्रहणमात्रस्यावेदत्वासाधकत्वात्। इतरथा ब्रह्मविद्यापदविवक्षितस्योपनिषद्भागस्यापि पृथग्ग्रहणेनावेदत्वापत्तेर्दुर्वारत्वात्।

न च ब्रह्मविद्यापदेन ब्रह्मज्ञानस्यैव विवक्षिततया नोपनिषद्भागविवक्षेति शक्यं वक्तुम् "मन्त्रविदेवास्मि नात्मवित्" इति ब्रह्मज्ञानाभावकथनेन तत्रोपनिषद्भागविवक्षणावश्यंभावात्। अवेदभूतेतिहासपुराणव्यवधानं चासिद्धम्, "पञ्चमं वेदानां वेदम्" इति तयोरपि वेदत्वेन विशेषणात्।

एकायनशब्दस्यार्थान्तरपरत्वकल्पना च प्रसिद्धिप्राचुर्येण मुख्यार्थपरिग्रहे बाधकाभावादैन्द्रीन्यायानवतारेणोत्सर्गसिद्धबर्हिर्न्यायपराहता। एतेन "एकायनं नीतिशास्त्रम्" इति शांकरं व्याख्यानं प्रत्युक्तम्।

एकायनशब्दस्य वेदशाखाविशेषे प्रसिद्धिप्राचुर्यं च—

"यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।
गृणन्ति सत्यधर्माणः सत्यं सत्येषु सामसु॥"

इत्यादिमहाभारतवचनैः,

"ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे।
पश्चिमे सामवेदं स्यादाथर्वं चोत्तरे भवेत्॥
एकायनीयशाखोत्थमन्त्रान्सर्वासु दिक्षु च।
पाठयेत्पावनान्पश्चादग्निसंस्कारमारभेत्॥" इति,

"ततः प्रीतमना नाथः साक्षात्स ब्रह्मसंज्ञकम्।
वेदमेकायनं ब्रह्म व्याकर्तुमकुतोभयम्॥
व्याजहार स सद्ब्रह्ममयं प्रणवमादितः।
तत्कारणत्वाद्वेदानां मूलसंज्ञा सनातनी॥
ततोऽन्यान्यपि दिव्यानि व्यापकान्युपदिष्टवान्।"

इति च श्रीकालोत्तरसंहितादिवचननिचयैश्च स्वध्यवसानम्।

अपिच—अनुमानेनाप्येकायनशाखायाः श्रुतित्वं सिध्यत्केन वार्यताम् । यथा हि श्रुतित्वेनोभयवादिसंप्रतिपन्नानां "द्वे विद्ये वेदितव्ये" "यत्तदद्रेश्यमग्राह्यम्" इत्यादीनां "[1]द्वे ब्रह्मणी वेदितव्ये" "यत्तदव्यक्तमजरम्" इत्यादिवचनैरुपबृंहितत्वाच्छ्रुतित्वं स्थाप्यते, एवमेकायनशाखावचनानां च बहूनामितिहासपुराणवचनैरुपबृंहितत्त्वाच्छ्रुतित्वं दुर्वारम् ।

तथा हि—"सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्तिः समृद्धिमानेवावृद्धिरन्यून आद्यो वशी स्वाधीनोऽनादिरनन्तो व्यपगतनिद्राभयक्रोधतन्द्रिर्व्यपगतेच्छातमःक्लमव्याधिर्निर्दोषो निरधिष्ठो निरवद्यः" इत्येकायनवाक्यं "[2]सर्वज्ञः सर्वदृक्" इत्यादिभिर्भगवता पराशरेणोपबृंहितम् ।

तथा—"सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्तिः समृद्धिमानेव निर्दोषो निरधिष्ठो निरवद्यो ये भगवन्तं वासुदेवं विदुस्त एव तं विदुः" इति

---

1 श्रीविष्णुपुराणे षष्ठेऽशे पञ्चमेऽध्याये—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ ६४

द्वे वै विद्ये वेदितव्ये इति चाथर्वणी श्रुतिः ।
परया त्वक्षरप्राप्ति ऋग्वेदादिमयाऽपरा ॥ ६५

यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥ ६६

विभु सर्वगतं नित्यं भूतयोनिरकारणम् ।
व्याप्तं व्याप्यं यतः सर्वं यद्वै पश्यन्ति सूरयः ॥ ६७

तद्ब्रह्म परमं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः ।
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ॥ इति ॥ ६८

2 श्रीविष्णुपुराणे पञ्चमेंऽशे प्रथमेऽध्याये

सर्वज्ञः सर्वदृक् सर्वशक्तिर्ज्ञानबलर्द्धिमान् ।
अन्यूनश्चाप्यवृद्धश्च स्वाधीनोऽनादिमान्वशी ॥ ४६

क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः ।
निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः ॥ इति ॥ ४७

वाक्यान्तरम् "[1] एवमेष महाशब्दः" इत्यादिवचनैस्तेनैवोपबृंहितम्। हेयप्रत्यनीकत्व-कल्याणगुणाकरत्व-रूपोभयलिङ्गनिमित्तकस्य भगवच्छब्दस्य वासुदेवासाधारणत्वप्रतीतेरुभयत्र तुल्यत्वात्।

तथा—

"नासिद्धस्य कृतमस्तीह किंचि-
न्नासंयतेष्विन्द्रियेष्वेव सिद्धिः।
न संयमोऽस्त्यपरित्यज्य कामान्
कामत्यागो नान्तरेणाप्रमादम्॥
अप्रमादो ज्ञानमयो ज्ञानं प्रकृतिसंहितम्।
प्रकृतौ कर्म संदध्यात्तदा नित्यं कृतं भवेत्॥"

इतीयं श्रुतिर्भगवता बादरायणेन "[2] नाकृतात्मा" इत्यादिवचनैरुपबृंहिता।

तस्मात्सुष्ठूक्तमितिहासपुराणैरुपबृंहितप्रदेशविशेषवत्त्वं श्रुत्यन्तरस्यैवैकायनस्यापि श्रुतित्वस्थापकमिति।

---

1 श्रीविष्णुपुराणे षष्ठेंऽशे पञ्चमेऽध्याये—
एवमेष महाशब्दो मैत्रेय भगवानिति।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः॥ ७६
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः।
शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः॥ ७७
उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥ ७८
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ इति॥ ७९

2 महाभारते उद्योगपर्वण्यष्टषष्टितमेऽध्याये—
नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम्।
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात्॥ १७
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम्॥ इति॥ १८

एतेन—यदुक्तं शिवार्कमणिदीपिकायामप्पदीक्षितेन—"किं मोक्षयीधर्मेणासंयुक्त इमं धर्मं जिज्ञासीत ओं भोः जिज्ञासीत" इत्यादिप्रश्नप्रतिवचनरूपमेकायनशाखागतं श्रुतिवचनं पाञ्चरात्रोक्तसकलवैदिककर्मपरित्यागे मूलमिति कल्पना त्वेकायनशाखां कल्पयतामेव शोभते—इति, तत्, यथोक्तैस्सोपपत्तिकैः प्रमाणगणैः सिद्धमपि श्रुतित्वमेकायनशाखाया अपलपतस्तस्यैव शोभते—इति व्यक्तीकृतम् ।

अतो विरुद्धतया भातानामर्थानां प्रत्यक्षश्रुतिमूलत्वात्कार्त्स्न्येन पञ्चरात्रस्य श्रुत्यविरुद्धत्वं सिद्धमिति सांख्याद्यागमान्तराणां तदभावात्सिद्धं तेभ्योऽस्य वैलक्षण्यम् ।

एतेन—पञ्चरात्रेषु श्रुतिविरुद्धार्थप्रतीतिर्ग्रन्थनिर्माणानुप्रविष्टपुरुषाशयदोषनिबन्धनेति कुकल्पनाऽपि दूरापास्ता । उपदर्शितरीत्यांऽशतोऽपि श्रुतिविरोधाभावात्स्वतःसर्वज्ञनिर्दोषपरमपुरुषप्रणीतत्वेन पुरुषाशयदोषसंभावनाया अप्यनुन्मेषाच्च ।

यदप्युच्यते—"[1] सांख्यं योगः पञ्चरात्रम्" इतिश्लोके वेदव्यतिरिक्तानां चतुर्णां तुल्यवत्परिगणितानां साम्यं कथंचिन्निर्वहणीयम्, तत्रावान्तरग्रन्थकर्तृभूततत्तत्पुरुषबुद्धिदोषान्मिथो विरुद्धार्थान्वयेन साम्यासंभवेऽप्यादिवक्तृप्रणीतानां चतुर्णामप्यागमानां न क्वचिदपि वेदविरोधगन्ध इति सिद्धं साम्यमिति न पञ्चरात्रस्य सांख्यादिभ्यो वैलक्षण्यसिद्धिः—इति । तदनुपपन्नम्—

"प्रत्यक्षहेतवो योगाः सांख्याश्शास्त्रविनिश्चयाः ।" इति,

"तुल्यं शौचं तयोर्युक्तं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ॥"

---

1 शान्तिपर्वणि—

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥ ३५९ ६४

इति च मोक्षोपायविषये,

" बहवः पुरुषा राजन् सांख्ययोगविचारिणः ।
नैत इच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ (शान्ति° ३६०-२)

इति तत्त्वविषये च सांख्ययोगयोर्वैषम्यसद्भावस्य श्रुत्यर्थवैरूप्यस्य च भगवता बादरायणेनैव स्फुटीकृतत्वात् । योगमते हि तत्त्वसाक्षात्कारो मोक्षोपायः, सांख्यमते शास्त्रजन्यप्रकृतिपुरुषविवेकः, इत्युपायविषयवैषम्यं, प्रकृतिपुरुषातिरिक्तेश्वराङ्गीकारानङ्गीकाराभ्यां तत्त्वविषयवैषम्यं, परमात्मन उपादानत्वानभ्युपगमरूपं वेदान्ताद्वैषम्यं च सुस्पष्टं हि प्रतीयते ।

तत्रार्वाचीनग्रन्थकारमतस्यैव व्यासेन प्रदर्शितत्वोक्तेरयुक्तिसहत्वादादिवक्तृप्रणीतानामेवैतेषां वैषम्यं व्यासेन प्रदर्शितमित्यवश्याभ्युपगम्यमिति पाञ्चरात्रस्य तेभ्यो वैलक्षण्यं निरपवादम् ।

[1] यदप्युच्यते—मोक्षधर्मे व्यासेनैव कपिलादिमतस्य विभ्रमादिदोषराहित्यगुणसाहित्ययोरुक्तत्वात्, कपिलादिभिर्नारायणस्य प्रतिपादितत्वप्रतिपादनाच्च सांख्यादिषु श्रुत्यर्थवैरूप्यमवान्तरवक्तृदोषनिबन्धनमेवेत्यकामेनाप्यभ्युपेत्यमिति ।

---

1 मोक्षधर्मे—

एवं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।
यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ॥ इति,
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । ३५९ ६८
यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ॥ इति, ,, ६९
तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः ॥ ,, ७०
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ॥ इति च ।

तदसमञ्जसम् — यद्येवमवान्तरवक्तृपुरुषापराधादेव श्रुत्यर्थवैरूप्यं सांख्यादिष्वभविष्यत्, न त्वादिवक्तृकपिलाद्यपराधात्, हन्त तर्ह्यादिवक्तृ-कपिलादिमतेनैव व्यासः सिद्धान्तं तत्रतत्रावक्ष्यत् न तु भीष्ममुखात्स्वमतेन। न च तथा कृतं मोक्षधर्मे, भीष्मवाक्यमुखेन स्वमतेनैव सिद्धान्तस्य तत्रतत्रोक्तत्वात्।

तत्र हि "प्रत्यक्षहेतवो योगाः सांख्याः शास्त्रविनिश्चयाः।" इति योगसांख्ययोरेकैकाभिमतं मोक्षोपायं पृथगुक्त्वा,

"उभे चैते मते ज्ञाने नृपते शिष्टसंमते।
अनुष्ठिते यथा शास्त्रं नयेतां परमां गतिम्॥"

इतिवचनेन समुचित्यानुष्ठिताभ्यां तत्त्वसाक्षात्कारप्रकृतिपुरुषविवेकाभ्यां पुरुषार्थलाभ इति स्वमतेन सिद्धान्तितम्।

एवं—"नैत इच्छन्ति पुरुषम्" इत्यनेन सांख्यानां योगानां च परमात्मन उपादानकारणत्वानभ्युपगममुक्त्वा,

"बहूनां पुरुषाणां हि यथैका योनिरुच्यते।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणातिगम्॥" (३६०-३)

इति प्रक्रम्य,

"समासतस्तु यद्व्यासः पुरुषैकात्म्यमुक्तवान्।
तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः॥" (३६०-७)

इति स्वमतेनैव सिद्धान्तितम्, न तु कपिलहिरण्यगर्भाद्यादिवक्तृमतेन।

अत्र—"बहूनां पुरुषाणां हि" इति पूर्वमुक्तत्वात्,

"तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित्॥" (३६१-४)

इति पुरुषैकात्म्यशब्दविवक्षितस्य स्वेनैव व्याख्यानाच्च पुरुषाणामैकात्म्यमेकेनात्मना युक्तत्वमित्यर्थप्रतीत्या जगच्छरीरकः परमात्मा सर्वोपादानमित्युक्तं भवतीति स्वमतेनैव सिद्धान्तः स्फुटएव। तत्र स्वसिद्धान्तप्रदर्शनावसरे तस्य कपिलाद्यभिमतत्वप्रदर्शनाभावात्तत्प्रणीतागमेषु श्रुत्यर्थवैरूप्यमवर्जनीयमिति पाञ्चरात्रे तदभावान्निश्चप्रचम् तेभ्योऽस्य वैलक्षण्यमिति।

यदप्युच्यते—यदि भगवत्प्रणीतत्वादेवागमान्तरवैलक्षण्यं पञ्चरात्रस्याभिमतम्, हन्त तर्हि किमपराद्धं बौद्धार्हताद्यागमैः। [1]बुद्धादीनामपि भगवदवतारतया तत्प्रणीतानामपि भगवत्प्रणीतत्वाविशेषेण पञ्चरात्रतुल्यत्वात्—इति, तदिदं दृष्टान्तदार्ष्टान्तिकभूतागमद्वयस्वरूपानभिज्ञाननिबन्धनं चोद्यम्।

अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः।
दृश्यते तादृगेवेदं द्वयोरागमयोरिह॥

एकत्र वेदाप्रामाण्यप्रतिपादनपूर्वकं भूयोभूयो वेदविरुद्धार्थप्रलपनम्, इतरत्र वेदप्रामाण्योपजीवनपूर्वकं कार्त्स्न्येन वैदिकपरमरहस्यार्थविशदीकरणम्; प्रमाणभूतैः प्रबन्धैः श्रुतिविरुद्धत्वनिबन्धनपरित्याज्यत्वप्रतिपादनाच्छिष्टबहिष्कृतत्वमेकत्र, इतरत्रांशतोऽपि श्रुतिविरोधाभावात्प्रमाणभूतबहुप्रबन्धप्रशस्यमानतया निखिलशिष्टजनसमाद्रियमाणत्वम्; एकत्र विप्रलिप्सादिदोषपुरस्कारेणासुरविमोहनार्थं प्रवर्तितत्वम्, इतरत्र विप्रलिप्सादिदोषसंभावनागन्धरहितेन परमपुरुषेण नारदशाण्डिल्यादिसाधुजनपरित्राणैकप्रयोजनकतया समनुगृहीतत्वम्; इत्येवं विरुद्धस्वभावयोर्बुद्धागमश्रीपाञ्चरात्रयोः कथं साम्यं संभाव्यताम्?

---

1 मोक्षधर्मे नारदं प्रति भगवद्वाक्यम्—
ततः कलियुगस्यादौ द्विजराजतरुं श्रितः।
भीषया मागधेनैव धर्मराजगृहे वसन्॥ ३४८ ४२
काषायवस्त्रसंवीतो मुण्डितः शुक्लदन्तवान्।
शुद्धोदनसुतो बुद्धो मोहयिष्यामि मानवान्॥ इति। ,, ४३

अथ—साधुजनपरित्राणोद्देशेन प्रवर्तितत्वकथनं विप्रलिप्सामूलकं मन्दमतीनां श्रद्धाजननार्थम्—इति यदि शङ्क्येत, हन्तैवं भगवता सर्वशक्तिना वेदानामपौरुषेयत्वादिख्यापनमपि जगद्वञ्चनार्थं कृतमिति किं नाश्रीयते? सर्वत्राविश्वासप्रसङ्गात्तथा नाश्रीयत इति चेत्पश्यसि, हन्त तर्हि प्रकृतेऽपि तथैवेति विश्राम्यतु भवान्।

तस्मान्नारदशाण्डिल्यादिसात्त्विकजनसंरक्षणैकफलकतया प्रवर्तितत्वात्, वेदविहितानेकार्थप्रतिपादकत्वात्, दुर्बोधवेदार्थप्रतिपत्तिसौकर्याय प्रवृत्ततया प्रमाणभूतेषु भारतादिषु प्रशस्यमानत्वात्, वेदार्थविशदीकरणरूपत्वानुगुण्येन वेदान्तार्थप्रतिपादनदर्शनात्, अनि[illegible]यं वेदेऽप्यनाश्वासप्रसंगाच्च, दुष्कृद्विनाशार्थप्रवृत्त-श्रुतिविरुद्धार्थप्रतिपादक-प्रमाणभूतप्रबन्धान्तरनिन्दित-बुद्धागमादिसाम्यबुद्धिः श्रीपञ्चरात्रसमीपं नासादायितुमलम्।

एतेन—पाञ्चरात्रस्य मोहशास्त्रत्वमवलम्ब्य कुण्डगोलकस्त्रीशूद्रादिवेदानधिकृतविषयतया प्रामाण्यं, वैदिकविषये अप्रामाण्यं च, महाभारते तत्प्रामाण्यप्रपञ्चनं च वेदानधिकृतकुण्डगोलकादिविषयमिति स्वोत्प्रेक्षितां कुकल्पनां शिवार्कमणिदीपिकायां प्रदर्शयन्नप्पदीक्षितो न केवलं गलहस्तितः, अपि तु माध्यस्थ्यप्रामाणिकत्वाभ्यां प्रच्युतः—इत्यप्याविष्कृतम्।

अपिचेदमत्र विवेचनीयम्—किं कार्त्स्न्येन पञ्चरात्रस्य वेदानधिकृतकुण्डादिविषयत्वम्? उतांशत इति। तत्र न तावदाद्यः पक्षः संभवति। कुण्डत्वादिप्रसक्तिशून्यानां प्रत्युत वैदिकत्वेन परमभागवतत्वेन च जगति ख्यातयशसां नारद-शाण्डिल्यो परिचरवसु-भीष्म-भरद्वाज-दुर्वासोऽहिर्बुध्न्यप्रभृतीनां पञ्चरात्राधिकृतत्वस्य प्रामाणिकत्वेनापह्नोतुमशक्यत्वात्। अंशतः कुण्डादिविषयत्वं तु न पाञ्चरात्रस्य वैदिकबहिष्कार्यत्वमापादयति। कुण्डादिभिरप्यनुष्ठेयानां सत्यवदनादिसामान्यधर्माणां श्रुतिस्मृतीतिहासपुराणादिषु प्रतिपादनेन श्रुत्यादीनामपि बहिष्कार्यत्वापत्तेः। अतएव वेदानधिकृतकुण्डादिविषयत्वनिबन्धना पञ्चरात्रनिकर्षप्रत्याशाऽप्युन्मूलिता। प्रत्युत

कुण्डाद्यनुष्ठेयान्धर्मविशेषानप्युपदिशतः पञ्चरात्रस्य कुण्डादिविषयकानुकम्पातिशयाविष्करणेन श्रुतिस्मृत्यादिभ्योऽप्युत्कर्षातिशय एव प्रसिद्ध्यति।

यत्तु—तत्र स्वोत्प्रेक्षानूलकायामपि कुकल्पनायां प्रामाणिकत्वसिद्धिप्रत्याशया, पञ्चरात्राणां मोहशास्त्रत्वव्यञ्जनप्रत्याशया च "इयं व्यवस्था कौर्मे दर्शिता ...... [1]गौतमशप्तान् प्रस्तुत्य" इत्याद्युपक्रम्य—

---

कूर्मपुराणे पूर्वभागे चतुर्दशेऽध्याये—

1 पुरा दारुवने पुण्ये मुनयो गृहमेधिनः ॥ १४ ९५
ईश्वराराधनार्थाय तपश्चेरुः सहस्रशः ।
ततः कदाचिन्महता कालयोगेन दुस्तरा ॥ ,, ९६
अनावृष्टिरतीवोग्रा ह्यासीद्भूतविनाशिनी ।
समेत्य सर्वे मुनयो गौतमं तपसां निधिम् ॥ ,, ९७
अयाचन्त क्षुधाऽऽविष्टा आहारं प्राणधारणम् ।
स तेभ्यः प्रददावन्नं मृष्टं बहुविधं बुधः ॥ ,, ९८
सर्वे बुभुजिरे विप्रा निर्विशङ्केन चेतसा ।
गते तु द्वादशे वर्षे कल्पान्त इव शंकरी ॥ ,, ९९
बभूव वृष्टिर्महती तोयपूर्णमभूज्जगत् ।
तत्र सर्वे मुनिवराः समामन्त्र्य परस्परम् ॥ ,, १००
महर्षिं गौतमं प्रोचुर्गच्छाम इति वेगतः ।
निवारयामास च तान् कंचित्कालं यथासुखम् ॥ ,, १०१
उषित्वा मद्गृहेऽवश्यं गच्छध्वमिति पण्डिताः ।
इत्युक्ताः सर्वमुनयो गौतमेन महात्मना ॥ ,, १०२
ततो मायामयीं सृष्ट्वा कृशां गां सर्व एव ते ।
समीपं प्रापयामासुर्गौतमस्य महात्मनः ॥ ,, १०३
सोऽनुवीक्ष्य कृपाऽऽविष्टस्तस्याः संरक्षणोत्सुकः ।
गोष्ठे तां बन्धयामास स्पृष्टमात्रा ममार सा ॥ ,, १०४
स शोकेनाभिसंतप्तः कार्याकार्यमहो मुनिः ।
न पश्यति स्म सहसा तादृशं मुनयोऽब्रुवन् ॥ ,, १०५
गोवधोऽयं द्विजश्रेष्ठ यावत्तव शरीरगः ।
तावन्न तेऽन्नं भोक्तव्यं गच्छामोऽथ वयं बहिः ॥ ,, १०६

" तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ॥

---

तेन ते मुदिताः सन्तो देवदारुवनं शुभम् ।
जग्मुः पापवशं नीतास्तपश्चर्तुं यथा पुरा ॥ १४ १०७
स तेषां मायया जातां गोहत्यां गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीव कोपनः ॥ ,, १०८
भविष्यथ त्रयीबाह्या महापातकिभिः समाः ।
बभूवुस्ते तथा शापाज्जायमानाः पुनःपुनः ॥ ,, १०९
सर्वे संप्राप्य देवेशं शंकरं विष्णुमव्ययम् ।
अस्तुवँल्लौकिकैः स्तोत्रैरुच्छिष्टा इव सेवकाः ॥ ,, ११०
देवदेवौ महादेवौ भक्तानामार्तिनाशनौ ।
[illegible] ॥ ,, १११
ततः पार्श्वस्थितं विष्णुं संप्रेक्ष्य वृषभध्वजः ।
यत्किं तेषां भवेत्कार्यं प्राह पुण्यैषिणामिति ॥ ,, ११२
ततः स भगवान्विष्णुः शरण्यो भक्तवत्सलः ।
गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणतान्हरिः ॥ ,, ११३
न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर ।
संगच्छते महादेव पुण्यो वेदाद्धि निर्बभौ ॥ ,, ११४
तथाऽपि भक्तवात्सल्याद्रक्षितव्या महेश्वर ।
अस्माभिः सर्व एवेमे गन्तारो नरकानपि ॥ ,, ११५
तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ॥ ,, ११६
एवं संबोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥ ,, ११७
कापालं लागुडं वामं भैरवं पूर्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ॥ ,, ११८
सृष्ट्वा तावूचतुर्देवौ कुर्वाणाः शास्त्रचोदितम् ।
पतन्तो निरये घोरे बहून्कल्पान्पुनःपुनः ॥ ,, ११९
एवं तु मानुषे लोके क्षीणपापचयास्ततः ।
ईश्वराराधनबलाद्गच्छध्वं सुकृतां गतिम् ॥ इति ॥ ,, १२०

एवं संबोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥
कापालं लागुडं वामं भैरवं पूर्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ॥ ”

इति कूर्मपुराणवचनोदाहरणं—तत्, पित्तोपहतस्य सर्वत्र पीतिमदर्शनवत् अनादिपापवासनामूलकदुराग्रहकलुषितहृदयतया सुस्पष्टेऽपि कौर्मवचने स्वाभिमतार्थानुगुण्यं पश्यतः तद्वचनार्थयाथात्म्यज्ञानवैधुर्यनिबन्धनम् ।

तत्र हि ‘ कापालं लागुडम् ’ इति परिगणितेषु तन्त्रेषु महाभारतादिवचनान्तरैककण्ठयेन पञ्चरात्रस्य भगवत्प्रणीतत्वं कापालपाशुपतादीनां च रुद्रप्रणीतत्वमित्यविवादम् ।

शास्त्रप्रणयनप्रयोजनं चोपक्रमभूते पूर्ववाक्ये रक्षणं विमोहनं चेति द्वयमेव प्रतिज्ञातम् । तत्र कापालपाशुपतादीनां शारीरके निराकृतानां विमोहनैकप्रयोजनत्वमित्युभयवादिसंप्रतिपन्नम् । तथा सति परिशेषादर्थस्वभावाच्च पञ्चरात्रस्य रक्षणैकप्रयोजनकत्वं वचनविवक्षितमवश्याभ्युपेयमिति क्व तस्य मोहशास्त्रत्वसिद्धिः ?

अत एव “ चकार मोहशास्त्राणि केशवोऽपि शिवेरितः । ”

इत्युदाहृतवचने ‘ चकार मोहशास्त्राणि ’ इत्यस्य पूर्ववाक्यान्वितत्वेन ‘ केशवोऽपि शिवेरितः ’ इत्यत्र क्रियाकर्मणोरपेक्षायां पूर्ववाक्याच्चकारेतिक्रियापदानुषङ्गेऽपि संनिहितस्यापि मोहशास्त्राणीतिकर्मकारकस्य नानुषङ्गः । उपक्रमाख्यप्रकरणसहकृतेन रक्षणफलकत्वरूपवस्तुसामर्थ्यापरपर्यायलिङ्गेन संनिधिबाधात् । अपि तु ‘ शास्त्राणि करिष्यावः ’ इति पूर्वश्लोकश्रुतस्य शास्त्राणीत्यस्य व्यवहितस्याप्यनुषङ्गेण, अश्रुतस्य वाऽपूर्वस्य पदस्याध्याहारेण कर्माकाङ्क्षां पूरयित्वा क्रियाकारकयोजना बोद्धया ।

'कापालं लागुडम्' इतिश्लोकोपात्तानां सर्वेषामप्यविशेषेण मोहशास्त्रत्वाङ्गीकारे 'रक्षणार्थाय विमोहनार्थाय च शास्त्राणि करिष्यावः' इत्युपक्रमावगतप्रतिज्ञाहानिर्दुर्वारा स्यात्। केशवशंकरयोरन्यतरेणापि रक्षणफलकस्य कस्यचिदपि शास्त्रस्याप्रणीतत्वप्रसंगात्।

पाञ्चरात्रस्यैव मोहनार्थत्वं तद्व्यतिरिक्तानां तु कापालादीनां रक्षणफलकत्वम्—इति वैपरीत्यं तु शारीरके निराकृतानां कापालादीनां रक्षणार्थत्वासंभवादेवानाशङ्कनीयम्। अत्र यदपेक्षितमधिकं तन्मानरत्ने प्रपञ्चितमस्माभिः।

अतः प्रकृते कूर्मपुराणवचनोदाहरणं विपरीतफलसाधकत्वाद्दीक्षितस्य विरुद्धमेव।

शाण्डिल्यनारदादीनां कुण्डत्वाद्यावहं मतम्।
शिवार्कमणिदीपोक्तं भूष्णुना केन गृह्यताम्॥

अपिच—अनन्यदैवतैर्निराशीःकर्मकारिभिः प्रतिबुद्धसंज्ञितैरेकान्तिभिर्निषेव्यमाणान् पाञ्चकालिकक्रियारूपान् धर्मविशेषान् प्रतिपादयतः अत एव मोक्षैकफलकस्य पञ्चरात्रस्य जन्मसहस्रेणापि नाप्रामाण्यं मोहशास्त्रत्वं वा स्वध्यवसानम्। प्रतिबुद्धाप्रतिबुद्धरूपेण द्वैविध्यमधिकारिणां प्रदर्श्य तत्राप्रतिबुद्धानां च्यवनधर्मत्वं प्रतिबुद्धानां मोक्षभागित्वं च "[1] चतुर्विधा मम जनाः" इत्यादिवचनैः शृङ्गग्राहिकया प्रतिपादयता भगवता

---

1 चतुर्विधा मम जना भक्ता एव हि ते श्रुताः॥ ३५० ३३
तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः।
अहमेव गतिस्तेषां निराशीःकर्मकारिणाम्॥ ,, ३४
ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः।
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्॥ ,, ३५
ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्॥ ,, ३६
भक्तं प्रति विशेषस्त एष पार्थानुकीर्तितः।
त्वं चैवाहं च कौन्तेय नरनारायणौ स्मृतौ॥ इत्यादि। ,, ३७

मोक्षधर्मेऽर्जुनाय तत्प्रामाण्यस्योद्घोषितत्वात्। न च उदाहृतवचनसंदर्भे एकान्तिपदश्रवणेऽपि पञ्चरात्रशब्दस्याश्रवणादेकान्तिनां पञ्चरात्रनिष्ठत्व-प्रत्यायकप्रमाणाभाव इति भ्रमितव्यम्।

"पञ्चरात्रविदो ये तु यथाक्रमपरा नृप।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै॥" (३५९-७२)

इत्यादिभिः प्रदेशान्तरस्थैर्वचनशतैरेकान्तिनां पञ्चरात्रनिष्ठत्वस्य मुक्तकण्ठं प्रत्यायनात्।

तस्मात्पञ्चरात्रस्य मोहशास्त्रत्वग्राहकप्रमाणाभावात्पूर्वोक्तविरुद्धस्व-भावत्वादिहेतुबलाच्च भगवत्प्रणीतत्वाविशेषेऽपि सिद्धं बुद्धागमादत्यन्त-वैलक्षण्यम्।

यदप्युच्यते—यद्येवं कपिलाद्यागमेषु श्रुत्यर्थवैरूप्यमवर्जनीयमित्यु-द्भाव्येत, तर्हि शास्त्रकर्तृणां कपिलादीनां भ्रमादिदोषराहित्यवचनं नारायण-प्रतिपादकत्ववचनं च विरुद्धमापद्येत—इति।

तत्रेदं प्रष्टव्यं—

"यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः।
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ॥"

इत्यत्रादिशब्दविवक्षितानामासुरिपञ्चशिखाद्यवान्तरवक्तृणां भ्रमराहित्यवचनं कथं घटताम्—इति।

नच—आदिशब्दस्य योगादिप्रवर्तकहिरण्यगर्भादिपरत्वान्नासुरि-पञ्चशिखादिपरत्वमिति नावान्तरकर्तृणां भ्रमराहित्यवचनम्—इति वाच्यम्। "एवं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम्" इतिप्रक्रान्तपूर्व-वाक्यानुगुण्येन "यदुक्तम्" इतिश्लोकस्थयच्छब्दद्वयस्यापि प्रकृतसांख्य-परामर्शित्वेनादिशब्दस्यापि तदवान्तरकर्तृपरत्वौचित्येनाप्रस्तुतहिरण्यगर्भादि-परत्वायोगात्। अतोऽवान्तरकर्तृणामपि भ्रमराहित्यं तत्रोक्तमिति तेषु भ्रान्त्यारोपो भवतो दुर्वच एव।

अत एव " नैत इच्छन्ति " इत्यत्र वर्तमाननिर्देशविरोधप्रसंगादेतच्छब्देनेदानींतनकुतार्किकविवक्षाऽपि न शक्या संभावयितुम् ।

नच कुतार्किकाणां सर्वदा संभवाद्वर्तमाननिर्देशाविरोधाय तदानींतना एव कुतार्किका विवक्ष्यन्तामिति वाच्यम् ।

" बह्वः पुरुषा राजन् सांख्ययोगविचारिणः ।
नैत इच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ " (३६०-२)

इत्यत्र सांख्ययोगविचारिण इतिनिर्देशस्य कुतार्किकविषयत्वानुपपत्तेरेतच्छब्दस्यापि सांख्ययोगविचारिपदसमानार्थकत्वावश्यकत्वात् ।

किं च—" नैत इच्छन्ति " इत्युक्तेः कुतार्किकविषयत्वं यद्यभ्युपगम्येत न कपिलादिविषयत्वम्, तर्हि सिद्धान्ते निमित्तोपादानैक्यं कपिलहिरण्यगर्भाद्यभिमतमित्युच्येत । न चैतदस्ति, स्वमतेन सिद्धान्तोक्तेः प्रदर्शितत्वात् ; सर्वथाऽप्यवान्तरवक्तृभ्रमादिमूलकमेव सांख्यादिषु श्रुत्यर्थवैरूप्यमिति निर्वहणं नोपपत्तिमत् ।

ननु च—यदि कपिलादीनामादिकर्तृणां भ्रमराहित्यं प्रतिपाद्यते, यदि च मतभेदस्यावान्तरवक्तृभ्रममूलकत्वं प्रतिषिध्यते, तर्हि कथंतरां सांख्यादिषु मतभेदः ? कथंतमां च सूत्रकारेण तन्निरसनमुपपद्यताम् ? इतिचेत्—

वयमपि तदेव पृच्छामः—कथमुभयं घटताम्—इति, पक्षद्वयसाधारणानुपपत्तेर्द्वाभ्यामपि परिहर्तव्यत्वात् ।

तत्र यद्युच्येत—भ्रमादिदोषरहितानामप्यादिवक्तॄणां निरन्तरपरिचिन्तितवेदशैलीवशीकृतमानसतया स्ववाग्व्यवहारेष्वप्यवशाद्वेदशैल्यनुसरणोपनिपातात्तदानीं स्वविवक्षितादधिकार्थान्तराप्रतिपादनं, विवक्षितेऽर्थे पुरुषप्ररोचनार्थोऽतिवादश्चेत्युभयं नासंभावितम् । यथा निर्दोषस्यापि वेदस्य । वेदो हि दर्शपूर्णमासप्रकरणे वाजपेयं, ज्योतिष्टोमप्रकरणे चातुर्मास्यं, अग्निहोत्रप्रकरणे दर्शपूर्णमासं, कर्मप्रकरणे ब्रह्मस्वरूपम्, इत्येवमन्यप्रकरणे अन्यन्न

प्रतिपादयति। अतिवदति च प्राकरणिकं विवक्षितमर्थम्। यथा—"अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "नकिरिन्द्रत्वदुत्तरो न ज्यायानस्ति वृत्रहन्" इत्यादौ। नैतावता कर्मान्तरं तत्त्वान्तरं च वेदस्यानभिमतम्। प्रकरणान्तरे वेदेनैव कर्मान्तरतत्त्वान्तरयोः सुनिरूपणात्। एवं कपिलादीनामपि तदानीं स्वविवक्षितादधिकाप्रतिपादनं विवक्षितार्थातिवादश्च युज्येते।

सांख्यशास्त्रे विवक्षितार्थश्च प्रकृतिप्राकृतपुरुषतत्त्वविवेकमात्रमिति तदतिरिक्तार्थाप्रतिपादनं ततःपरं किंचिदपि नास्तीत्यतिवदनं च नानुपपन्नम्।

एवं योगशास्त्रे च समाधिपर्यन्तो यमनियमाद्यष्टाङ्गकयोगः, ध्यानालम्बनभूतेश्वरस्वरूपम्, तस्य च क्लेशकर्मविपाकाशयैरपरामृष्टत्वम्, इत्येतावन्मात्रं प्रतिपिपादयिषितमिति युक्तं निमित्तोपादानैक्याद्यप्रतिपादनम्।

न चैतावता कपिलादीनामीश्वरस्वरूपं तस्योपादानत्वं चानभिमतं भवति। कपिलहिरण्यगर्भादिभिरेवान्यत्र कपिलासुरिसंवादब्रह्मरुद्रसंवादादिस्थलेष्वीश्वरस्वरूपस्य तदुपादानकारणत्वादेश्च सुनिरूपितत्वात्।

एतेन — "विवक्षितादधिकार्थान्तराप्रतिपादनादतिवाददर्शनाच्च सांख्ययोगयोरनादरणीयत्वम्"—इत्येतदपि निरस्तम्। उपजीव्यार्थभूयिष्ठत्वात्, वेदान्तार्थज्ञानानुष्ठानसौकर्याय तदपेक्षावश्यंभावात्, विप्रलिप्सादिदोषविरहदशायां प्रणीतत्वाच्च।

यदि हि विवक्षितादधिकार्थान्तराप्रतिपादकतामात्रमनादरणीयत्वे हेतुः स्यात्, कथं तर्हि शब्दानुशासनस्यादरणीयत्वं सिद्ध्येत्? न हि तत्र कर्मकलापो ब्रह्मविद्या वा प्रतिपाद्यते।

अथ तत्र तयोरविवक्षितत्वादप्रतिपादनमिति मन्यसे, तर्हि तुल्यं तत्प्रकृतेऽपीति गृहाण।

एवं सत्यपि ये नाम वादकुतूहलिनस्तार्किकंमन्या बाहुश्रुत्याभावेन कपिलादिहृदयं निश्चेतुं न प्रभवन्ति। प्रभवन्ति तु तत्रापातप्रतिपन्नमेवार्थं तात्त्विकमुपपन्नं चाध्यवसातुं, तेषामुपदेशवशीकार्यत्वाभावं वादैकवशीकार्यत्वं च विनिश्चिन्वानेन भगवता बादरायणेन सांख्यादीनामापातप्रतिपन्नार्थमात्रपरत्वमन्वारुह्य न्यायनिबन्धनरूपैः सूत्रैस्तन्निरसनं वैदिकपक्षश्रद्धावैकल्यपरिहारार्थं युक्तं कर्तुम्। युक्तं च भारतादौ कपिलादीनां प्रबन्धान्तरेषु ब्रह्मस्वरूपतज्जगदुपादानत्वादिप्रतिपादनानुगुण्येन सांख्ययोगार्थनिरूपणद्वारा तत्कर्तृहृदयाविष्करणं तत्प्रशंसनं च। इतिहासपुराणयोरुपदेशैकप्रधानतया तर्ककार्कश्यायोगेन न्यायस्वरूपस्य तत्रावक्तव्यत्वात्। अत एव—"यथागमं यथान्यायं निष्ठा नारायणः प्रभुः" इति शारीरकन्यायमेव तत्राप्यतिदिशति।

अत एव "तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः" इतिवचनेन ग्रन्थान्तरेषु कपिलादीनां ब्रह्मसद्भावतज्जगदुपादानत्वादिप्रतिपादनस्य निष्ठानिर्णयहेतुत्वं प्रकटयति। भ्रमादिदोषराहित्यं च कपिलादीनामतिवदनातिरिक्ततत्त्वविषयकमिति सर्वमनाकुलम्। एवं सांख्ययोगपाशुपतानामेकदेशाप्रामाण्येऽप्यविरुद्धांशे प्रामाण्यं तुल्यमेव—इति।

एवं तर्हि—विवक्षां विनाऽतिवदनासंभवात्, मनोवृत्तिविशेषं विना विवक्षाविशेषासंभवात्, सत्त्वादिगुणत्रययोगं विना च मनोवृत्तिविशेषासंभवात्, अवश्यं कपिलादीनां गुणत्रययोगोऽभ्युपेत्यः। वेदान्तार्थनिर्णयोत्तरं च कपिलादिकृतमतिवदनमुपेक्षणीयमिति सांख्याद्यागमानां कारणदोषबाधकप्रत्ययावुक्तौ स्याताम्।

वेदे तु अपौरुषेयत्वाभ्युपगमात्कारणदोषाभावः, तदतिरिक्तप्रबलतरवचनाभावाच्च बाधकप्रत्ययासंभवः। पञ्चरात्रे तु अर्थवादरूपमपि वेदविरुद्धं वचनमदृष्टचरम्। अतः सांख्ययोगपाशुपतेभ्यो वैलक्षण्यं पञ्चरात्रस्य दुरपह्नवम्।

तत्रायं विवेकः—मुमुक्षूपजीव्यार्थभूयिष्ठत्वाभावात्, परावरतत्त्व-विपर्यासनिषिद्धानुष्ठानमिश्रतारूपप्रधानप्रतिपाद्यविरोधस्य दुष्परिहरत्वाच्च पाशुपतमतस्य क्वचिदंशे वेदविरोधाभावेऽपि मुमुक्षुभिर्नात्यन्तादरणीयत्वम्।

सांख्ययोगयोस्तु — कतिपयार्थाप्रतिपादनमात्रस्यानादरणीयत्वहेतु-त्वाभावस्योपदर्शितत्वात्, आपाततो वेदविरोधभ्रमहेतुभूतातिवादांशपरि-त्यागेनादर[illegible] प्रमाणत्वम्।

पञ्चरात्रे तु—अनुप[illegible], वेदविरुद्धत्वभ्रमहेतुभूताति-वादाभावात्, विरुद्धतया भातानामर्थानां पठ्यमानश्रुतिमूलकत्वोपपादनात्, अंशेऽपि वेदविरोधाभावाच्च कार्त्स्न्येन वेदवदप्रकम्प्यं प्रमाणत्वमिति।

अयमपरस्तेषां विवेकक्रमः—पाशुपते उपादेयांशाल्पत्वं त्याज्यां-शबहुत्वम्, सांख्ययोगयोरुपादेयांशबहुत्वं त्याज्यांशाल्पत्वम्, पाञ्चरात्रे तु अंशतोऽपि त्याज्यार्थाभावात्साकल्येनोपादेयत्वमिति सिद्धं वेदवत्कार्त्स्न्येन प्रामाण्यमिति।

वाद्यन्तरकृत उत्पत्त्यसंभवाधिकरणगतचतुःसूत्रीनिर्वाहस्तु सूत्र-कारहृदयापरिज्ञाननिबन्धनः, स्वाज्ञानमूलकः, परमपुरुषवरणीयताहेतुगुण-विशेषविरहमूलकः, पञ्चरात्रसिद्धान्तापरिशीलनमूलकः, सूत्रशैलीपरिज्ञान-वैधुर्यनिबन्धनः, सूत्राक्षराननुगुणश्चेति भाष्यश्रुतप्रकाशिकादिमहानिबन्धेष्व-वगन्तव्यम्।

किं बहुना—ये नाम पञ्चरात्रस्याप्रामाण्यं चिख्यापयिषन्ति नूनं ते वेदस्यैवाप्रामाण्यं प्रख्यापयन्ति।

"एवमेकं सांख्ययोगं वेदारण्यकमेव च।
परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते॥" (३५८-८१)

इति सांख्ययोगोपकृतस्य पूर्वोत्तरभागात्मकस्य वेदस्यैव भगवता बादरायणेन पञ्चरात्रत्वाभिधानात्।

अत्र हि वेदशब्देन पूर्वभागः, आरण्यकशब्देनोपनिषद्भागः, परस्पराङ्गानीत्यङ्गशब्देन परस्परापेक्षितार्थप्रतिपादकत्वं च विवक्षितम्। तत्र सांख्यशास्त्रे प्रकृतिपुरुषविवेकमात्रजननात्प्रकृतिवियुक्तज्ञानानन्दाद्यात्मकपुरुषस्वरूपानुगुणः पुरुषार्थः कः? प्रकृतिपुरुषनियन्तृरूपं तत्त्वान्तरं च किम्? इत्यस्त्यपेक्षा।

देहान्तर - देशान्तर - भोग्यफलसाधनकर्मप्रतिपादकस्य विद्यामुखेन मोक्षपर्यवसायियज्ञादिप्रतिपादकस्य च वेदपूर्वभागस्याऽस्ति प्रकृतिपुरुषविवेकापेक्षा।

योगशास्त्रस्यापि यमनियमाद्यष्टाङ्गयोगप्रतिपादकस्य "उपास्यः कीदृशः" इत्यस्त्युपास्यविशेषापेक्षा। उत्तरभागस्य च भगवदुपासनविधायकस्यास्त्येव यमनियमाद्यात्मकयोगस्वरूपापेक्षा।

अतः परस्परापेक्षितार्थप्रतिपादकत्वात्परस्पराङ्गभूताः सांख्ययोगवेदाः समुदिता एकं पञ्चरात्रं कथ्यत इत्यर्थावगमेन सांख्ययोगयोर्विरुद्धांशमपहाय ताभ्यां स्वापेक्षितांशविवरणेनोपकृतः पूर्वोत्तरभागात्मको वेदः पञ्चरात्रं भवतीति वेदव्यतिरेकेण पञ्चरात्राभावव्यञ्जनात्तदप्रामाण्यकथनं वेदाप्रामाण्यकथनतुल्यमेवेति।

न चैवं सांख्ययोगोपकृतस्य वेदस्यैव पञ्चरात्रत्वाङ्गीकारे बादरायणेन शारीरके सांख्यादिनिराकरणानुपपत्तिः शङ्क्या। सांख्याभिहितानां पञ्चविंशतितत्त्वानामब्रह्मात्मकतामात्रप्रतिषेधेन तत्त्वस्वरूपानिराकरणात्, योगाभिहितस्य केवलनिमित्तकारणतामात्रस्य प्रतिषेधेन योगस्वरूपानिराकरणात्।

एवं पाशुपतेऽपि यदीश्वरस्य निमित्तकारणतामात्रं यच्च परावरतत्त्वविपर्यासकल्पनं यश्च वेदबहिष्कृताचारः, तन्मात्रं निराक्रियते न पशुपतिस्वरूपमपि। तदिदं स्पष्टतयैव प्रतिपादितं बादरायणेनैव मोक्षधर्मे प्रश्नोत्तररूपेण।

"सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः॥"

इति वचनेन च—

"सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ।
यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ॥" (३५९-६८)

इतिवचनैकार्थ्यानुगुण्येन सांख्याद्यभिहिततत्तत्स्वरूपमात्रमङ्गीकार्यम् । न तु सुगताद्यागमवत्सर्वं बहिष्कार्यम्—इत्युच्यते । शारीरकोक्तन्यायानुगृहीत-तत्तदागमोक्तानि वस्तूनि परामृश्य सर्वेषां वस्तूनां ब्रह्मात्मकतामनुसंदधानस्य सर्वेषामप्यागमानां नारायण एव निष्ठेति प्रतीतिः सुलभैव ।

"सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥" (३५९-६४)

इतिश्लोके वेदापेक्षया सांख्यादीनां चतुर्णामुत्सर्गतो यद्भिन्नमतत्वं प्रति-पादितम् , तस्य पाञ्चरात्रविषयेऽपवादं प्रदर्शयितुम् "[1] सांख्यस्य वक्ता कपिलः" इत्यादिना सांख्ययोगपाशुपतानां संभावितदोषपुरुषबुद्धिप्रणीतत्व-प्रदर्शनेन तेषु वेदविरुद्धांशसद्भावं सूचयन् "पञ्चरात्रस्य कृत्स्नस्य

---

1 सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥ ३५९. ६५
अपान्तरतपाश्चैव वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥ ,, ६६
उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥ ,, ६७
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥ ,, ६८
यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ।
न चैनमेवं जानन्ति तमोभूता विशांपते ॥ ,, ६९
तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः ।
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ॥ ,, ७०

वक्ता नारायणः स्वयम्" इत्यनेन पञ्चरात्रस्यासंभाव्यमानदोषपरमपुरुषप्रणीतत्वाविष्करणेनांशतोऽपि वेदविरोधाभावं प्रकटयन् कात्स्न्येंन तस्य प्रामाण्यं प्रतिपाद्य "यथागमं यथान्यायम्" इत्यनेन पञ्चरात्रानुयायित्वेनैव सांख्यादीनां नारायणनिष्ठया प्रामाण्यं नान्यथेत्युपसंहरति। सांख्ययोगपाशुपतानां त्रयाणां परस्परतारतम्यं तु प्रागेवोपदर्शितमस्माभिः।

तदेवमैहिकामुष्मिकसकलपुरुषार्थतत्साधनावबोधितया निखिलजनोपकारकेऽपि श्रीमति पञ्चरात्रे यत्केषांचिदप्रामाण्यप्रतिपत्तिपूर्वकं तदनादरेण तद्विहितार्थाननुष्ठानं, तत्कस्य हेतोरिति प्रश्नोत्तररूपेण तत्कारणं जगति प्रख्यापयितुं बादरायणेनैव मोक्षधर्मे वचनसंदर्भविशेषः प्रवर्तितः। तद्यथा—

जनमेजयः—

"एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम्।
न कुर्वन्ति कथं विप्रा अन्ये नानाव्रते स्थिताः॥ (३५८-६७)

वैशम्पायनः—

तिस्रः प्रकृतयो राजन्देहबन्धेषु निर्मिताः।
सात्त्विकी राजसी चैव तामसी चैव भारत॥ ,, ६८

---

निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः।
ससंशयान् हेतुबलान्नाध्यावसति माधवः॥ ३५९ ७१

पञ्चरात्रविदो ये तु यथाक्रमपरा नृप।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै॥ ,, ७२

सांख्यं च योगं च सनातने द्वे
वेदाश्च सर्वे निखिलेन राजन्।
सर्वैः समस्तैर्ऋषिभिर्निरुक्तो
नारायणो विश्वमिदं पुराणम्॥ इति॥ ,, ७३

देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह ।
सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः ॥ ३५८ ६९

अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमः ।
नारायणं परं मोक्षे ततो वै सात्त्विकः स्मृतः ॥ ,, ७०

मनीषितं च प्राप्नोति चिन्तयन्पुरुषोत्तमम् ।
एकान्तभक्तः सततं नारायणपरायणः ॥ ,, ७१

मनीषिणो हि ये केचिद्यतयो मोक्षधर्मिणः ।
तेषां विच्छिन्नतृष्णानां योगक्षेमवहो हरिः ॥ ,, ७२

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥ ,, ७३

सांख्ययोगेन तुल्यो हि धर्म एकान्तिसेवितः ।
नारायणात्मके मोक्षे ततो यान्ति परां गतिम् ॥ ,, ७४

नारायणेन दृष्टस्तु प्रतिबुद्धो भवेत्पुमान् ।
एवमात्मेच्छया राजन् प्रतिबुद्धो न जायते ॥ ,, ७५

राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते ।
तदात्मकं हि पुरुषं जायमानं विशांपते ॥
प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयम् । ,, ७६
पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ॥
रजसा तमसा चास्य मानसं समभिप्लुतम् । ,, ७७
कामं देवाश्च ऋषयः सत्त्वस्था नृपसत्तम ॥
हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः ।" ,, ७८

इति ।

तत्सिद्धं पञ्चरात्रस्य कार्त्स्न्येन प्रामाण्यमप्रतिघृष्यमिति "तत्सामान्यादितरेषु तथात्वम्" इति न्यायेन प्रकृतस्यापि च तन्त्रस्याप्रकम्प्यं प्रामाण्यमिति ।

तत्र पञ्चरात्रसंहितान्तराद्प्ययमस्याः संहिताया विशेषः—यन्निखिल-तन्त्रसारार्थप्रतिपादकत्वम्, बहुभिः संहितान्तरैः प्रशस्यमानत्वं च। तमिममर्थमेतद्विषयिणी "तन्त्ररहस्यम्" इति समाख्याऽप्युपोद्बलयति।

अयं चापरो विशेषोऽस्याः—यत्, स्वस्मिन्नादरवतां शब्दतोऽर्थतश्चा-मृतधाराप्रस्यन्दिन्या द्राक्षापाकरूपया ग्रन्थशैल्याऽतिसंग्रहविस्तरविनिर्मोकेण तत्तत्प्रकरणापेक्षितानां यावदर्थानां प्रश्नोत्तररूपेण सुस्पष्टतया प्रतिपादकत्वम्।

अपिच — अयमस्या अनितरसाधारणधोरणीसिद्धश्चातुरीविशेषः—यत् जगज्जन्मादिकारणभूतब्रह्मस्वरूप - रूप - गुण - विभवादिप्रतिपादनेन, तत्तत्प्रकरणगतैः सुधास्यन्दिभिरिव तैस्तैर्वचनसंदर्भविशेषैः सर्वेश्वरत्वसूचक-निखिलजगन्निगरणोद्गिरणक्रमणोद्धरणादिनारायणदिव्यचेष्टितप्रतिपादनेन च भगवतः श्रियः पत्युः पुण्डरीकाक्षस्यैव सर्वस्मात्परत्वं व्यञ्जयन्ती कुदृष्टिभिः कदर्थितानां तपस्विनीनां श्रुतिसीमन्तसीमन्तिनीनामन्तर्ज्वरं प्रशमयति।

अतएवान्ययोगव्यावर्तनेनापीममर्थं द्रढयन्ती सर्वेश्वरकृपालेश-समासादितशक्तिलेशनिबन्धनसर्वेश्वरत्वशङ्कास्पदयोर्ब्रह्मरुद्रयोः परत्वव्यतिरेकं व्यञ्जयितुमेकचत्वारिंशाध्यायोक्तमधुकैटभवृत्तान्ते वेदापहरणप्रयुक्तसृष्टयसा-मर्थ्यनिबन्धननिर्वेदातिशयवर्णनेन चतुर्मुखस्य कर्मवश्यत्वं तदीयापन्निवारणेन भगवत एव पारम्यं च सप्रमोदमुपपादयति।

तथा—

"मम नारायणेनोक्तं पुण्ये बदरिकाश्रमे।
पितामहशिरश्च्छेदमहापातकशान्तये।
सर्वबाधाप्रशमनं सर्वदुःखनिवारणम्॥"

इति पञ्चविंशाध्यायगतेन वचनसंदर्भेण शिरश्छेदभागितया छेदजन्या-वर्जनीयमहापातकभागितया च द्वयोरपि तयोः कर्मवश्यत्वं प्रदर्श्य भगवतो

रुद्रं प्रति सर्वबाधाप्रशामक-सर्वदुःखनिवारक-यन्त्रविशेषोपदेष्टृत्वकीर्तनेन [1]मत्स्यपुराणोक्तं कपालमोचनप्रकारं दिङ्मात्रेण सूचयन्ती भगवत एव परत्वं स्थापयति ।

---

1 मत्स्यपुराणे त्र्यशीत्युत्तरशततमेऽध्याये कपालिनः कपालमोचनप्रकारो यथा—

ईश्वर उवाच—

आसीत्पूर्वं वरारोहे ब्रह्मणस्तु शिरो वरम् ।
पञ्चमं शृणु सुश्रोणि जातं काञ्चनसप्रभम् ॥ ८४
ज्वलत्तत्पञ्चमं शीर्षं जातं तस्य महात्मनः ।
तदेवमब्रवीद्देवि जन्म जानामि ते ह्यहम् ॥ ८५
ततः क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण च्छिन्नं तस्य शिरो मया ॥ ८६

ब्रह्मोवाच—

यस्मादनपराधस्य शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि ।
ब्रह्महत्याऽऽकुलो भूत्वा चर तीर्थानि भूतले ॥ ८७
ततोऽहं गतवान्देवि हिमवन्तं शिलोच्चयम् ।
तत्र नारायणः श्रीमान्मया भिक्षां प्रयाचितः ॥ ८८
ततस्तेन स्वकं पार्श्वं नखाग्रेण विदारितम् ।
स्रवतो महती धारा तस्य रक्तस्य निःसृता ॥ ८९
प्रयाता साऽतिविस्तीर्णा योजनार्धशतं तदा ।
न संपूर्णं कपालं तु घोरमद्भुतदर्शनम् ॥ ९०
दिव्यं वर्षसहस्रं तु सा च धारा प्रवाहिता ।
प्रोवाच भगवान्विष्णुः कपालं कुत ईदृशम् ॥ ९१
आश्चर्यभूतं देवेश संशयो हृदि वर्तते ।
कुतश्च संभवो देव सर्वं मे ब्रूहि पृच्छतः ॥ ९२

देवदेव उवाच—

श्रूयतामस्य देवेश कपालस्य तु संभवः ।
शतं वर्षसहस्राणां तपस्तप्त्वा सुदारुणम् ॥ ९३
ब्रह्माऽसृजद्वपुर्दिव्यमद्भुतं रोमहर्षणम् ।
तपसश्च प्रभावेण दिव्यं काञ्चनसंनिभम् ॥ ९४

किं बहुना—स्वस्य परदेवतानिष्कर्षैकप्रवृत्तत्वं स्वयमेव मुक्तकण्ठं प्रदर्शयति चरमेऽध्याये—

" स्थित्युत्पत्तिप्रलयकृद्भूतानां यत्र चिन्त्यते ।
स विष्णुश्चिन्त्यते यत्र स्वरूपगुणवैभवैः ॥ इति ।

अन्ये चास्या बहवो गुणविशेषाः परीक्षकाणां निपुणधियामेतद्ग्रन्थावलोकनेनैव व्यक्तीभविष्यन्तीति नास्माभिः प्रतिज्ञामुखेनोपपादनमर्हन्ति ।

" यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन निवार्यते ॥ "

तदेवं सर्वप्रमाणमूर्धन्यस्यास्य प्रबन्धरत्नस्य केषुचित्पूर्वाचार्यनिबन्धेषूदाहृतान्यमृतायमानानि कानिचिद्वचनान्याकलय्यामूलचूडमस्यावलोकने संजातकुतूहलतया चातकवृत्तिमवलम्बमानेषु विबुधजनेषु समुत्कण्ठितेषु, दुर्वात्ययेव दुर्विधिना सांप्रतिककालवैषम्यान्मातृकाकोशजलधरेष्वदर्शनं नीतेषु,

---

ज्वलत्तत्पञ्चमं शीर्षं जातं तस्य महात्मनः ।
निकृत्तं तन्मया देव तदिदं पश्य दुर्जयम् ॥ ९५

यत्र यत्र च गच्छामि कपालं तत्र गच्छति ।
एवमुक्तस्ततो देवः प्रोवाच पुरुषोत्तमः ॥ ९६

श्रीभगवानुवाच—

गच्छगच्छ स्वकं स्थानं ब्रह्मणस्त्वं प्रियं कुरु ।
तस्मिन् स्थास्यति भद्रं ते कपालं तस्य तेजसा ॥ ९७

ततः सर्वाणि तीर्थानि पुण्यान्यायतनानि च ।
गतोऽस्मि पृथुलश्रोणि न क्वचित्प्रत्यतिष्ठत ॥ ९८

ततोऽहं समनुप्राप्तो ह्यविमुक्ते महाशये ।
अवस्थितः स्वके स्थाने शापश्च विगतो मम ॥ ९९

विष्णुप्रसादात्सुश्रोणि कपालं तत्सहस्रधा ।
स्फुटितं बहुधा यातं स्वप्नलब्धं धनं यथा ॥ इति ॥ १००

महाशयैः कैश्चिद्ग्रन्थस्यास्य संपादने परिष्कृत्य प्रकाशने च नियुक्तोऽहमेतत्परिष्करणं शब्दमूर्तिधरस्य भगवतः श्रियः पत्युः पादसंवाहनं विभावयन् विबुधमनोरथपरिपूरणेनात्मानं च कृतार्थयन् श्रमेण महता प्राचीनान् नव मातृकाकोशान् संपाद्य तांस्तानपि पाठभेदान् संगृह्य यथामति संस्कारमस्य निरवर्तयम् ।

अथाप्यस्मदीयानतिनैपुण्यात् सीसकाक्षरयोजकदोषात् शोधनसमयसंभाव्यमानदृष्टिदोषाद्वा यदि कुत्रचित् स्खालित्यमुपलभ्येत, तन्मां बोधयेयुर्गुणपक्षपातिनो विचक्षणाः, अवलोक्य चेमं ग्रन्थमास्माकीनस्य ग्रन्थपरिष्करणश्रमस्य पचेलिमतामापादयेयुरिति साञ्जलिबन्धमभ्यर्थ्यते ।

" तत्तत्कल्पितयुक्तिभिः शकलशः कृत्वा तदीयं मतं
यच्छिष्यैरुदमर्दि सात्त्वतमतस्पर्धावतामुद्धतिः ।
यच्चेतः सततं मुकुन्दचरणद्वन्द्वास्पदं वर्तते
जीयान्नाथमुनिः स योगमहिमप्रत्यक्षतत्त्वत्रयः ॥

आकल्पं विलसन्तु सात्त्वतमतप्रस्पर्धिदुष्पद्धति-
व्यामुग्धोद्धतदुर्विदग्धपरिषद्वैदग्ध्यविध्वंसिनः ।
श्रीमन्नाथमुनीन्द्रवर्धितधियो निर्धूतविश्वाशिवाः
सन्तः संततगद्यपद्यपदवीहृद्यानवद्योक्तयः ॥ "

12-12-14
*Adyar, Madras*

इति विदुषामनुचरः,
**देवशिखामणिः रामानुजाचार्यशर्मा,**
अडैयार्पुस्तकालयप्रधानपण्डितः

॥ श्रीः ॥

# द्वितीयोपोद्घातः ।

संकल्पो यस्य हस्तैर्बहुभिररितमिस्रापहारप्रतीतै-
र्हुंकारेणापि भेत्तुं झडिति नतजगद्दुःखसंघातमीष्टे ।
यस्याज्ञा शास्त्रवर्गस्तमखिलभुवनाधारमुन्नामधेयं
व्याकोचाम्भोरुहाक्षं जलनिधितनयाजीवितं भावयामः ॥

आर्यमिश्राः, अवसरप्राप्तं किमपि निवेदयितुमस्मि दोहली भवाद्दशेष्वास्तिकसार्वभौमेषु । तदनुगृह्णीत मामवधानदानेन ।

विदितमेवेदं—यदपराजिताख्ये दिव्यनगरे श्रियःपतिरखिलहेयप्रत्यनीककल्याणगुणैकतानः श्रीमान्नारायणः सह महिषीगणेनानन्तभुवनाधारमनन्तं नाम भद्रासनमध्यासीनः स्वाभाविकदास्यमहारसज्ञान् शेषशेषाशनादिनित्यसूरिगणान् निवृत्ताविद्यापरिष्वङ्गान्मुक्तांश्च स्वस्वरूप-रूप-गुण-विभूति-प्रदर्शनेनानन्दयन्नपि चिराय दुस्तरे प्रकृतिसिन्धौ निमग्नान् प्रकृतिसाधर्म्यमुपेयुषः निजदास्यकथामप्यनभिजानानान् गर्भ-जन्म-जरा-मरणादि-परिक्लेशभाजनतया सीदतो माद्दशाननुचिन्त्य विधिनिषेधरूपाणि शास्त्राणि प्रवर्तयामास—इति ।

तानि च ऋग्यजुःसामाथर्ववेदरूपाणि कानिचित्, इतराणि तु अद्वारकतया स्वयमेव भगवता प्रणीतानि पारमेश्वर-सात्वत-विष्वक्सेन-खगेश्वर-श्रीपौष्करादि-संहितारूपाणि पञ्चरात्राणि । अन्यानि तु मन्वत्रि-वसिष्ठ-जमदग्न्यादिमहर्षिष्वन्तःप्रविश्य प्रवर्तितानि स्मृतिपुराणादिरूपाणि ।

तेषु चाद्वारकतया प्रणीतानां पारम्यमतथाभूतानां तदनुसारितया तद्व्याख्यानत्वेन प्रामाण्यमिति च स्थितिः ।

तत्र ये पुनर्वेदानामप्यामूलचूडमप्रामाण्यं मन्यन्ते, ये चांशतस्तेषां तत्, तेषां विषये तु संप्रति नैव बध्नीमः परिकरम् । यतस्तेषु भगवतो निरवधिककरुणाकूपारस्यापि करुणा स्वप्रसरणाय कियन्तंचन समयमपेक्षते ।

ये तु वेदाभिमानिनो ये च परमास्तिकाः प्रकृतविषये न व्यतिविद्रते । तेष्वपि केषांचित् परमवत्सलेन भगवता प्रणीतेष्वपि सात्त्वततन्त्रेषु हन्तानाशयज्ञतया समुन्मिषत्यांशिकमप्रामाण्यज्ञानम् , यतस्ते " अस्तित्वं-शान्तरं विवादस्थानमित्यतस्तत्प्रत्याख्यानायायमारम्भः । " इति धीरं प्रत्यवतिष्ठासामाबध्नन्ति । पश्यत परमपुरुषप्रणीतेषु जगदुज्जीवनैकोद्यमेष्वपि वचनेषु कथंतरां प्रादुष्ष्यादप्रामाण्यम् । तच्च वक्तुरज्ञानेनाशक्त्या विप्रलिप्सया वा शक्यशङ्कं । " यः सर्वज्ञः सर्ववित् " " पराऽस्य शक्तिर्विविधैव श्रूयते " " द्वा सुपर्णा सयुजा सखाया " इत्यादिना श्रुतमाहिम्नि न खलु तेषां संभवः सूपपादः ।

यदपि वेदनिन्दया तेष्वप्रमाणताबुद्धिरिति, तदपि नाहिनिन्दा-न्यायवित्सु यत्किंचिदेव । यच्च संकर्षणाख्यजीवोत्पत्तिप्रतिपादनेन जीवनित्य-ताप्रतिपादकवेदविरोध इति, तत्राप्यापातदृष्टिरेवापराध्यति । न पुनरायुष्मान् । एवंविधेष्ववहितस्य विमर्शेषु भवतः कथं वेदेषु वा प्रामाण्य-बुद्धिरकृतका भवितुमर्हति । यतोऽत्रापि " ता आप ऐक्षन्त " " तत्तेज ऐक्षत " इत्यादिकमेवंदृशस्तवाप्रमाणतासाधनमुपलभ्यते ।

तत्र पुनस्तदभिमानिदेवताऽभिधाननिर्णयात्परिहार इति चेत् , एषैवात्रापि गमनिकेति निपुणं निभालयतु भवान् ।

एवमपि तन्त्रत्वेनैवाप्रामाण्यमिति चेत् , नियतमेषैव गृहीतग्राहिता । सकलमिदमधिकृत्य भगवता भाष्यकारेण प्रपञ्चितमुत्पत्त्यसंभवाधिकरणे ' अव्याहतं प्रामाण्यं सात्त्वतागमानाम् ' इति ।

युक्तं चेदम्—“ इदं महोपनिषदम् ” इत्यादिना श्रीमति महाभारत-संहितारूपे पञ्चमवेदे श्रीसात्त्वततन्त्रप्रशंसाकृतो भगवतो वेदाचार्यस्य सूत्राणां तत्प्रमाणतास्थापनपरत्वम्—इति ।

पृथगेव च प्रामाण्यमुद्घोषितमागमानां श्रीभगवद्यामुनाचार्यपादै-रागमप्रामाण्याभिधाने निबन्धे ।

अथवा यस्य भवतो वेदेष्वप्यविद्यावद्विषयत्व-दोषमूलकत्वादि-निर्णयः, तस्य भगवच्छास्त्रेष्वपि स एवेति किमनेन च्छिन्नमस्माकम् । ये पुनः प्रमाण-शरणाः, तेषां तु नात्र काचिदपि विमतिः ।

यानि जगदुद्दिधीर्षया परमकारुणिकेन भगवतैवोन्मीलितानि, यानि च श्रुतिव्याख्यारूपतया तत्पीठमर्दरूपाण्यास्तिका आद्रियन्ते, यैश्च निरन्तरमनुशीलितैर्विच्छिद्यते भवपाशबन्धः, येभ्यश्च रोचयन्ते निखिलपुमर्थ-सार्थसमर्थनपटीयस्तमेभ्यो महीयांसः, येभ्यश्च न विरमन्ति भगवदेकशरणाः प्रामाणिकाः, येषां च भगवत्सत्त्ववत्पदाभिधेयभूतश्रीमन्नारायणसंबन्ध-पुरस्कारेण भागवत-सात्त्वत-व्यपदेश एक एवालं तादृशश्रीवैष्णवपरमधर्म-निर्मलीकरणैकप्रयोजनताऽऽविष्करणे । न च महावृक्ष-पुण्यजन-मङ्गलवारादि-वदियं संज्ञा । प्राक्प्रतिपादितैरेतद्गुणैरतथात्वावसायेन सुवर्ण-श्रीखण्ड-रत्नाकरादि-व्यवहारसाधारण्याविष्कारात् , येषु चाधिकारितरतमताामभिध्याय वेदेष्विव नानाधर्मप्रतिपादकतया भासमानेष्वप्यविद्या-कर्म-वासना-रुचि-प्रकृतिसंबन्ध-रूपचक्रकच्छेदनेन चेतनानां परमानन्दसंविदुन्मीलनैकोद्यमता-मवधारयन्ति कृतधियः । तेष्वेवं निरूपितप्रामाण्यस्वरूपेषु सांप्रतमहिर्बुध्न्य-संहिता नाम सेयममुद्रयत कैश्चन महाशयैः अडयार्ग्रामस्थसंस्कृतकोश-भाण्डागाराधिकारिभिः ।

यत्र पुनर्भगवता भरद्वाजमुनिना श्रीसुदर्शनमहिमानमधिकृत्य पृष्टेन दुर्वाससा स्वयमहिर्बुध्न्यशब्दिताद्भगवतः शंकरादधिगतानां विषयाणां प्रकाशनमुपक्रान्तम् । क्रमेण च षाड्गुण्यब्रह्मविवेकः, ब्रह्मणो हेयप्रतिभटत्व-कल्याणगुणाकरत्व-रूपमुभयलिङ्गत्वम् , प्रतिबन्धविगमे जीवानां ब्रह्मानु-

भवसंभवः, वैश्वरूप्यसंक्षेपः, अपहतपाप्मत्वादिगुणविशिष्टानामपि जीवानां विधिनिषेधात्मकशास्त्ररूपभगवदाज्ञाऽतिलङ्घनेन दुरनुष्ठितेनानादिकर्मणा बद्धदशानुभवः, तदनुबन्धीनि गर्भ-जन्म-जरा-मरण-नरकपातादि-दुःखानि, तद्वशाद्विभिन्नरुच्युत्पत्तिः, ततो भिन्नभिन्नपुरुषार्थसाधनप्रावण्यम्, नास्तिकानामप्यावर्जनाय तत्तदधिकारानुगुण्येन इष्टानिष्टसाधनबाधनाद्युपायप्रदर्शनम्, विद्यास्थाननिर्देशः, गुरुशिष्यलक्षणम्, चातुर्वर्ण्यचातुराश्रम्यतद्धर्मादिनिरूपणम्, अर्थसाधनतया राज्ञां संग्रामाद्युपयोगिशस्त्रास्त्रजातस्य सरहस्यस्य सोपसंहारस्य निर्देशः, प्रसंगान्नानाफलसाधकमन्त्रयन्त्रतन्त्रादिनिरूपणम्, योगशास्त्रसंग्रहः, प्रपत्तिप्राधान्यतत्स्वरूपतन्निष्ठप्रशंसादिकं चेति प्रमेयजातमुदञ्चितम्।

अनया च कलया "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति नीत्या विषयजातं सकलमविकलं प्रत्यपादि। अतो न पश्यामोऽत्रभुवने तथाविधं पुमांसं यस्येयमुपयोगाय नालम्। मन्यामहे च कृतार्थतयैवास्मादृशामतिदुर्लभेयमादरादद्य प्रसीदतीति।

अपिच यस्यां श्रीवैकुण्ठादिवर्णनपराणि तत्तन्मन्त्रध्येयदेवताऽऽकारोपस्थापकानि सुधारसमधुरिमाधरीकरणधुरीणानि सकृत्पाठमात्रेऽपि मितंपचानामप्यर्थावबोधकानि वाच्यवस्तु पुरत इवोपस्थापयन्ति विद्योतन्ते पद्यरत्नानि।

अस्याश्चान्यदपि चातुर्यं विस्मापयत्यस्मान्, यदेवं सर्वसाधारण्येन विषयानवभासयितुं प्रवृत्ताऽपीयं शुश्रूषापरितोषिताद्गुरोरेव सनियममधिगन्तव्यानां मन्त्रतन्त्रयन्त्रादीनां कयाऽपि भङ्ग्या गोपनेन गोपायति शास्त्रव्यवस्थामिव साधकजनतामपीति। न चेदमस्या गहनभावापादनादवगुण इत्याशङ्कनीयम्।

"यदृच्छया श्रुतो मन्त्रो बलेनाथ च्छलेन वा।
पत्रेक्षितो वा व्यर्थः स्यात्प्रत्युतानर्थदो भवेत्॥"

इति हि प्राचामाभाणकमत्र प्रमाणयामः। अत्र मन्त्रशब्दस्तन्त्रादेरुपलक्षणम्।

किं चेयमपक्षपातेनेयत्प्रमेयजातमुदञ्चयन्त्यपि श्रीमतः सुदर्शनस्य वाच्यवाचकसंबन्धप्रकाशनपूर्वकं श्रीमतो नारायणस्य 'बहु स्याम्' इत्याकारकसंकल्पाधिष्ठातृताम्, अत एव सर्वजगदाप्यायकताम्, सर्वप्रतिपक्षशिक्षणैकतानताम्, भगवन्मनस्तत्त्वात्मकतया जगदज्ञाननाशकताम्, सर्वानुवर्तनीयताम्, इतरदितरच्च विविक्तमुपदिशति वैभवम्।

अतः संहितेयं त्रैविद्यवृद्धैरस्मत्पूर्वाचार्यैः "समित्साधनकादीनाम्" इत्यादिप्रपत्तिप्रस्तावकवचनमन्यच्च प्रमाणतयोदाहरद्भिः प्रकाशितप्रामाण्या। इदंप्रामाण्यं श्रीमद्वेदान्ताचार्यैरपि "अहिर्बुध्न्योऽप्यन्ववादीत्" इत्युदटङ्कि।

श्रीमतः सुदर्शनस्यास्त्रसंघव्यापकतामनया प्रस्तावितां तत्रभवान् श्रीरङ्गनाथभट्टारकः श्रीरङ्गराजस्तवे "अस्त्रग्रामाग्रेसरम्" इत्यादिना निरदर्शयत्।

तत्रभवान् कूरनारायणयतीन्द्रश्च श्रीसुदर्शनशतकव्याजेन—

"वाणी पौराणिकी यं प्रथयति महितं प्रेक्षणं कैटभारेः
शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूत्याम्।
कर्तुं यत्तत्त्वबोधो न निशितमतिभिर्नारदाद्यैश्च शक्यो
दैवीं वो मानुषीं च क्षिपतु स विपदं दुस्तरामस्त्रराजः॥"

इत्युपबृंहयति।

अत्र यं सुदर्शनं कैटभारेर्महितं प्रेक्षणं प्रथयतीत्यनेन भगवत्संकल्परूपत्वमस्मिन्नुक्तम्। "तदैक्षत" "ईक्षतेर्नाशब्दम्।" इत्यादिश्रुतिसूत्रेषु ईक्षतेः संकल्पार्थत्वावसायात्।

बृहद्ब्रह्मसंहितादिष्वपि श्रीमतः सुदर्शनस्य माहात्म्यं, तत्संबन्धाभावे कस्यचिदपि परगतिलाभाभावः, संबन्धश्च द्वेषिणामिदंकरणको गात्रच्छेदः, अनुबन्धिनां तु तप्तस्यास्य बाहुना धारणम्, इत्याद्युपक्षिप्तम्। श्रुतयश्च यथैतद्विदधति तथाऽस्माभिः सदाचारसारादिषु निपुणं निरूपितमिति तत एव तत्सुगमम्।

तदुपबृंहणभूतेष्वितिहासादिषु चेदं निश्चप्रचम् । यथा श्रीमति महाभारते "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च" इति । अत्रायं पारिभाषिकः कृतलक्षणशब्दः ।

"विप्राद्यास्ते च शूद्राश्च यदैवं कृतलक्षणाः ।
तदा तु योग्या विज्ञेयाः समयश्रवणादिषु ॥"

इत्यादिना सा च प्रथिता । हरिवंशेऽपि "नामुद्रिताः प्रवेष्टव्या यावदागमनं मम । चक्राङ्किताः प्रवेष्टव्याः" इत्यादिना स्पष्टमेवैतदङ्कितेष्वेव भगवतः स्वीयतामतिरिति ।

अस्यां संहितायां यद्यपि तादृशं तप्तचक्राङ्कनं साक्षान्नोपक्षिप्तम्, अथापि "अनुक्तमन्यतो ग्राह्यम्" इतिन्यायेन प्रदेशान्तरात्तन्निर्णयः । अत एव हि सर्वशाखाप्रत्ययसर्ववेदान्तप्रत्ययन्याययोः पूर्वोत्तरतन्त्रयोरङ्गीकारः ।

अथवाऽत्र तत्संनियोगशिष्टस्य भगवदाराधनस्य विस्तरेण प्रपञ्चनं तदाक्षिपतीत्येवास्थेयम् । यदाहुः "संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति । तच्च—

. . . . . . . . . . यदैवं कृतलक्षणाः ।
तदा तु योग्या विज्ञेयाः समयश्रवणादिषु ॥
शास्त्रोदितासु सर्वासु सामग्रीषु महामुने ।

इत्यादिवचनशतसिद्धमिति परत्र विस्तरः ।

अस्यां क्वचिन्मुण्डकोपनिषत्समानार्थकत्वं वचनशैल्या दृश्यत इति युक्तमस्यास्तदुपबृंहणत्वम् । अतश्च वेदव्याख्यारूपत्वात् सार्वभौमी प्रमाणता ।

यद्यप्येवं बहवो विषयाः प्रतिपादनीयाः, तथाऽपि ते सर्वे प्रायशः एतत्संहिताप्रकाशनैदंपर्येण प्रवृत्तैः तत्रभवद्भिः, उभयवेदान्तप्रवर्तकैः

विद्वद्देवशिखामणिरामानुजाचार्यैः स्वीयोपोद्घाते निपुणमाम्रेडिता इति तदुपपादनाद्वयं विरिरंसामः ।

अस्याः प्रकाशने महान्तं परिश्रममङ्गीकृतवतां तत्रभवतां रामानुजाचार्याणां सौजन्यमौदार्यं परोपकारपरायणतां श्रद्धातिशयमनालस्यं सद्व्यवसायप्रावण्यमन्यदन्यदपि गुणजातं स्मारंस्मारं विस्मयमाना वयं सादरं सकार्तज्ञ्यं सोपग्रहं चैतेषु परस्सहस्रान् धन्यवादान्निर्मायं प्रकाशयामः ।

इह खल्वेते कलावस्मिन्नधिगतावद्यासु विद्यासु, विलुप्तप्रायेषु समयेषु, जीर्णप्रायेषु तालपत्रकोशेष्विव प्राचीनसिद्धान्तपथेषु, अवसितेषु मतिमत्सु, मत्सराविलतया वाचंयमेषु परिशिष्टेष्वपि शिष्टेषु विद्वत्सु, देहयात्रामात्रपरेषु मितंपचेषु परेषु, कथंचिदैदंपर्येण प्राचीनान् शुद्धान् कोशान् संपाद्य तेषु कीटघर्षणत्रुटनशैथिल्यादिजनितां गहनतां स्वविमर्शकौशलादिभिरपोह्य संप्रदायमात्रसुलभेषु मन्त्रयन्त्रादिभागेषु तादृशग्रन्थशोधनादिना प्राचीं समीचीं सरणिमुन्मील्य प्रोत्साह्य गीर्वाणभाषामयकोशभाण्डागाराधिकारिणः इदंमुद्रणेन पचेलिमतामस्मदीयं भागधेयमनीनयन्। अतत्प्रवणदुरधिगमश्चायं प्रयासः ।

अपि च तत्तद्विषयशीर्षिकान्यसनं च येषामत्र दुस्तरं शास्त्रार्णवमवतितीर्षूणां परं सौकर्यमापादयत् प्रकृतविदुषां नानातन्त्रेषु निस्सीमं पाण्डित्यमावेदयति । अबहुव्यक्तिनिष्ठं हि सर्वपथीनत्वं नाम धियः । अनपनोदनीयं चेतरैर्मानुष्यकसुलभमालस्यम् । संकटा च धनिनामपीदृशी प्रतिपत्तिः । भागधेयमात्रसुलभा हि निरन्तरायता नाम प्रक्रान्तस्य श्रेयसः कर्मणः । प्रोत्साहकविरहोऽपि केवलं सद्व्यवसायविरोधीति स्थिते सांप्रतिकं कालवैकल्यं तु प्रत्यनीकमेवैतादृशां पुरुषकाराणामिति किमत्र वक्तव्यम् ।

आहोपुरुषिका हि प्रथीयसी संप्रति पापस्य । यदयं प्रायशः सर्वोऽपि लोको लोकायत एवायतते । तदाऽपि खलु "स महात्मा सुदुर्लभः" इति भगवता गीतम् । इदानीं तु का वार्ता । अत एतावन्तं

प्रतिबन्धकसार्थमपनुद्य कार्तयुगधर्मप्रवर्तनरूपे निखिलभुवनक्षेमंकरे विषयेऽस्मिन्नुद्योगमिवान्तगमनमप्यासादितवन्तो महान्त इमे जीयासुः शरदां शतमिति प्रार्थयामहे ।

किंच अडैयार् संस्कृतभाषाकोशाधिकारी जर्मन्देश्यः श्राडर्नामा महाशयः स्वयं द्वीपान्तरनिलयतया वैदेशिकोऽपि वेदवैदिकव्यवहाराणां मतान्तरनिष्ठतया तटस्थोऽप्यास्माकीनमतव्यवस्थासु गीर्वाणभाषापरिचयमात्रेण सारग्राहितया "भजेत्सारतमं शास्त्रम्" इतिविहितसारतमसंपादनकौशलमासाद्य श्रीविशिष्टाद्वैतमतजीवातुभूतश्रीसात्त्वततन्त्रसिद्धान्तेषु इदंप्रोत्साहनेन महीयसीं श्रद्धामासाद्यैवंविधसंहितामुद्रणे प्रावर्तिष्टेतीदं विमृश्यमानं प्राध्वमस्मान् धन्यवादान् व्याहारयति ।

किंच अन्तरा समुपनतेऽपि महत्यन्तराये समारब्धमुद्रणोऽयं ग्रन्थ एतदीयव्यवसायभूम्नैव पूर्तिमनीयतेति जानन्तः संतुष्यामः ।

तदेवंविधे जगदुज्जीवनव्यापारे महिष्ठानिमानेवं प्रवर्तयन् भगवानितोऽप्येतेषां संहिताऽन्तरप्रकाशनसौकर्यं सद्व्यवसायं साधुजनादरं महान्तमुत्साहं च पुनःपुनरुपचिनुयादिति शतकृत्वः प्रार्थयामहे । इति सर्वमनवद्यम् ।

सर्वाः श्रुतीरागमजातमेत-
ल्लोकावनाय प्रथयन्पुराणः ।
पुमान् स जीयाज्जगतां प्रसूति-
र्जगच्च यः संजगदे मुनीन्द्रैः ॥

मृगेन्द्रमास्ये तमुपास्यमीडे
शक्तिर्यदीया जगतां प्रसूतिः ।
सुदर्शनं यस्य तु दर्शनाय
निदर्शितं येन यतो न भिन्नम् ॥

जयतु जलधिकन्याजानिरम्भोजनेत्रो
जयतु दनुजहर्ता पूरुषश्चक्रवर्ती ।
जयतु सततयोगादेतयोः प्रीतिमञ्चन्
विजितभवभयोऽस्मज्जीवितं सूरिसङ्घः ॥

लक्ष्मीनृसिंहसुततातकुलावतंसः
श्रीमत्कुमारकविभूषणतातसूरिः ।
श्रीसात्त्वते महति संहितयाऽनयाऽहे-
र्बुध्न्यस्य मोदमुपगम्य वदत्यथैवम् ॥[1]

21-12-14
*Triplicane, Madras*

इति भवादृशां प्रणयी,
कविभूषणः,
**श्री. ति. अ. ति. कुमारताताचार्यः**

---

1 सोऽयं द्वितीयोपोद्घातः— मुद्रितस्यास्याहिर्बुध्न्यसंहितापुस्तकस्यानूलचूडमवलोकनेन तदीयमक्षरसौष्ठवं मुद्रणशैलीं शोधनपरिपाटीं शोधयितुश्श्रमविशेषकृतां पुस्तकस्य गुणवत्तामन्यदन्यदप्येवमादिकं गुणजातं साक्षात्कृतवद्भिः, तदात्वसमुपजातेन महता प्रमोदभरेण परवशीकृतचेतस्तया इदंमुद्रणादिगुणकीर्तनेषु प्रवर्तितैः, सपरिकरश्रीपार्थसूतमङ्गलाशासनैदंपरतया श्रीवृन्दारण्यक्षेत्रमात्मवासेनालंकुर्वद्भिः, उभयवेदान्तप्रवर्तकत्वाद्यनन्तविरुदावलीविराजमानैः, तत्रभवद्भिः, श्री. ति. अ. ति. कुमारताताचार्यवर्यैः स्वीयानन्दभरसुसूचयिषया प्रतिफलनैरपेक्ष्येणास्मदन्तिके प्रहितः तदीयमौदार्यप्रकर्षं सौजन्यातिशयं गुणग्रहणैकशीलतां वैदुष्यकाष्ठां परगुणपरमाणुपर्वतीकरणप्रवणतामपरमपरं च गुणस्तोमं निर्मायं व्यञ्जयतीति तद्विषये प्रत्युपकर्तुमशक्नुवानैरस्माभिः तदीयोपोद्घातप्रचारणेनैव केवलमात्मानमानृण्यं गमयद्भिरवश्यं मुद्रणीयोऽयमिति निश्चित्य सधन्यवादमत्र पुस्तके संयोजितः ॥

हरिः ओम् ।

शुभमस्तु ।

# श्रीपाञ्चरात्रे अहिर्बुध्न्यसंहिता ।

## तत्र शास्त्रावतारो नाम प्रथमोऽध्यायः ।

श्रीः ।

[[1]शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥]

ओम् ।

(मङ्गलाचरणम्)

अक्षरत्रितया[2]ऽव्यक्तविकाराक्षादिरूपिणे ।
परव्यूहादितत्त्वाय नमश्चक्राय चक्रिणे ॥ १ ॥
सोमसूर्यानलाकल्पामकल्पामिन्दुशेखराम् ।
पञ्चबिन्दुं हरेः शक्तिं पञ्चकृत्यकरीं नुमः ॥ २ ॥

(भरद्वाजस्य दुर्वाससं प्रति सुदर्शनमाहात्म्यकारणप्रश्नः)

आप्लुतं दिव्यगङ्गायामुपासीनं परं पदम् ।
भरद्वाजोऽथ पप्रच्छ दुर्वाससमकल्मषम् ॥ ३ ॥

---

1. श्लोकोऽयं E F G पुस्तकेषु दृश्यते.
2. त्रितयव्यक्त D.

भरद्वाजः ।

अनसूयाहृदानन्द भगवंस्तपसां निधे ।
अस्ति मे संशयः कश्चित्तं मे व्याख्यातुमर्हसि ॥४॥
अग्नीषोमक्रियायोगिन्याथर्वणविनिर्णये ।
महोदयेऽस्त्रसङ्घे च प्रवर्तकनिवर्तके ॥५॥
लोकपालास्त्रसङ्घे च तत्तत्सामर्थ्यसंभृते ।
महोदयासु शक्तीषु[1] वह्निसूर्येन्दुवर्त्मनाम्[2] ॥६॥
अस्त्राश्रये च शस्त्रौघे ब्रह्मरुद्रादिनिर्मिते ।
त्रैलोक्यत्राणसंहारजनिकर्मविचक्षणे ॥७॥
महर्षिगणसंदृष्टे मन्त्रग्रामे महोदये ।
वैष्णवे च गदाशार्ङ्गखड्गादिपूर्वके ॥८॥
[3]लाक्ष्मे च हलग[4]ण्डाब्जपूर्वेऽस्त्रौघे महोदये ।
अन्यत्रोच्चावचेऽप्येवं कीर्त्यमाने प्रभावतः ॥९॥
सुदर्शनाश्रयत्वं तु तत्र तत्र निरूपितम् ।
किंकृतं तस्य माहात्म्यं स्वतः संसर्गतोऽपि वा ॥१०॥
किं तत्सुदर्शनं नाम क[5]श्च शब्दार्थ इष्यते ।
तेन किं क्रियते कर्म जगद्व्याप्नोति तत्कथम् ॥११॥
कियन्तः कीदृशाः के च व्यूहास्तस्योदिता मुने ।

1. इत्थमेव सर्वत्र पाठः.
2. वर्त्मना D.
3. लाक्ष्म्ये A B C E F.
4. हलकण्ठाब्ज D; हलघण्टाब्ज E.
5. काल A B C.

प्रयोजनं च किं तेषां व्यूही तेषां च कीदृशी ॥१२॥
विष्णुना तस्य संबन्धः कश्च कीदृक्च संमतः ।
किं तेन नियतं नित्यमुतान्यत्रापि दृश्यते ॥१३॥
एष मे संशयो जातो नानाशास्त्रनिरीक्षणात् ।
छिन्ध्येनं भगवन् सम्यगुपसन्नोऽस्म्यधीहि भोः ॥१४॥

(दुर्वाससः प्रश्नप्रशंसापूर्वकं तत्प्रतिवचनम्)

दुर्वासाः ।

उपपन्नमिदं वत्स यत्त्वयैवं विमृश्यते ।
तानि तानि तपांस्यद्य व्युच्छन्ति तव सुव्रत ॥१५॥

(पक्वकषायस्यैव परतत्त्वजिज्ञासोदयः)

आन्तःकरणिके[1] तैस्तैः क्षयं नीते कषायके ।
मनीषा जायते पुंसां परतत्त्वविमर्शिनी ॥१६॥

(अत्र ब्रह्मादीनामपि संशयः)

न संशयी भवानेव पूर्वोपन्यस्तवस्तुनि ।
ब्रह्माद्याश्च यतन्तेऽत्र[2] संशयाना मनीषिणः ॥१७॥

(स्वस्याहिर्बुध्न्यात्तत्त्वनिर्णयप्राप्तिः)

निर्णयोऽत्र मया प्राप्तो नारदाय सुरर्षये ।
साक्षात्कथयतः पृष्टाच्छंकराल्लोकशंकरात् ॥१८॥

(नारदस्योत्कर्षः)

प्राप्याग्र्यां तपसो व्युष्टिं नारदो देवसंमतः ।

---

1. आन्तं कारणिकैस्तैस्तैः A B C.
2. यतस्त्वत्र E.

छिन्दानः संशयान् सर्वान् ब्रह्मदेवमहर्षिषु ॥ १९ ॥

(तस्यापि तत्त्वविषयसंदेहादहिर्बुध्न्याभिगमनम्)

स्वयं तु संशयं प्राप्य गहनं दुर्विदं सुरैः ।
अरागरोगकलुषः तपस्वी संयतेन्द्रियः ॥ २० ॥
पदवाक्यप्रमाणानां याथातथ्यविधानवित् ।
ब्रह्मचारी दमावासः परापर[1]विभागवित् ॥ २१ ॥
शुश्रूषुरनहंवादी यथार्थज्ञानतत्परः ।
नारदो मुनिशार्दूलः त्रीन् लोकाननुसंचरन् ॥ २२ ॥
छेत्तारं संशयस्यास्य दुर्विदस्य सुरर्षिभिः ।
देवादनभिगम्यान्यं सर्वज्ञाच्चन्द्रशेखरात् ॥ २३ ॥

(कैलासवर्णनम्)

प्रभाभिः स्वाभिरखिलान् प्रहसन्तमिवाचलान् ।
उन्मेषमिव सत्त्वस्य प्रकृष्टज्ञानका[2]रिणः ॥ २४ ॥
सिद्धविद्याधराकीर्णं देवगन्धर्वसेवितम् ।
कैलासं शंकरावासं शंकरं द्रष्टुमाययौ ॥ २५ ॥

(अहिर्बुध्न्यवर्णनम्)

रुद्रैर्वसुभिरादित्यैः सिद्धैः साध्यैर्मरुद्गणैः ।
ऋषिभिर्योगिभिर्दिव्यैर्भूतैर्नानाविधैरपि ॥ २६ ॥
ददर्श सेवितं तत्र समासीनं सहोमया ।
त्र्यक्षं वरदमीशानं शूलिनं चन्द्रशेखरम् ॥ २७ ॥

---

1. परात्पर A B C E F.
2. कारणम् A B C E F.

पतिं पशूनामनिशं भवपाशविभेदिनम् ।
स्थितं मूर्तिभिरष्टाभिरवष्टभ्य जगत्त्रयम्[1] ॥ २८ ॥
तं दृष्ट्वा देवमीशानं नारदो देवदर्शनः ।
प्रणिपत्याथ तुष्टाव गीर्भिरर्घ्याभिरादरात् ॥ २९ ॥

(नारदकृताऽहिर्बुध्न्यस्तुतिः)

श्रीनारदः ।

नमस्ते देवदेवेश नमस्ते वृषकेतन ।
वृषप्रवरवाहाय [2]वृष्णे कामप्रवर्षिणे ॥ ३० ॥
ओजीयसे परस्मै ते मीढुष्टम नमोऽस्तु ते ।
सर्वज्ञाय स्वतन्त्राय नित्य[3]तृप्ताय ते नमः ॥ ३१ ॥
अनादिबोधरूपाय नमस्ते नित्यशक्तये ।
कर्त्रे [4]हर्त्रे च जगतां षडङ्गाय नमोऽस्तु ते ॥ ३२ ॥
दशाव्यय नमस्तुभ्यं नमस्ते कृत्तिवाससे ।
अघोरायाथ घोराय [5]घोरघोरतराय [6]च ॥ ३३ ॥
[[7]सद्योजाताय देवाय वामदेवाय ते नमः ।
नमो ज्येष्ठाय रुद्राय भवोद्भव नमोऽस्तु ते ॥ ३४ ॥
नमो बलविकाराय बलप्रमथनाय ते ।

1. त्रयीम् D.
2. वृष्णिकामप्रधर्षिणे A E F, विष्णो कामप्रधार्षिणे B.
3. वृत्ताय D.
4. भर्त्रे A B C.
5. घोरघोराय ते नमः D. 6. ते E F.
7. [ ] कुण्डलितं श्लोकद्वयं A B C E F पुस्तकेषु न दृश्यते.

नमः + + + + + + य ते नमः] ॥ ३५ ॥
नमः कलविकाराय कालाय कलनात्मने ।
[1]नमस्ते सर्वभूतानां दमनाय मनोन्मन ॥ ३६ ॥
नमः शर्वाय शान्ताय शंभवे शंभवे नमः ।
विद्येश्वर नमस्तुभ्यं भूतेश्वर नमोऽस्तु ते ॥ ३७ ॥
महादेव नमस्तेऽस्तु नमस्तत्पुरुषाय ते ।
ज्ञानरूप नमस्तुभ्यं नमो वैराग्यवारिधे ॥ ३८ ॥
ऐश्वर्यगुणपूर्णाय नमस्ते तपसां निधे ।
नित्यसत्य नमस्तेऽस्तु क्षमासार नमोऽस्तु ते ॥ ३९ ॥
धृतिसार नमस्तुभ्यं स्रष्ट्रे ते जगतां नमः ।
आत्मसंबोधपूर्णाय त्रीन् लोकानधितिष्ठते ॥ ४० ॥
दशाव्ययाय ते नित्यमव्ययाय नमो नमः ।
क्षोण्यम्ब्वनलवाय्वभ्र[2]चन्द्रादित्यात्मने नमः ॥ ४१ ॥
नमः सर्वोपकाराय त्रिलोकीमधितस्थुषे ।

दुर्वासाः ।

इति स्तुवानमग्र्याभिर्वाग्भिर्देवर्षिसत्तमम् ॥ ४२ ॥
प्रसादमधुरं वाक्यमित्युवाच वृषध्वजः ।

अहिर्बुध्न्यः ।

स्तोत्रेणानेन भक्त्या च तुष्टोऽस्मि मुनिपुङ्गव ॥ ४३ ॥
ब्रूहि किं करवाण्यद्य यद्यपि स्यात्[3]सुदुर्लभम् ।

---

1. नमस्ते सर्वभूतानामानन्दाय नमो नमः A B C E F.
2. चन्द्रादित्यात्ममूर्तिभिः D. 3. सुदुष्करम् D.

श्रीना[illegible]दः ।

किमन्यदिह [illegible]ं यदि तुष्टो जगत्पतिः ॥ ४४ ॥
एतदेव हि काङ्क्षन्ति यतमाना विपश्चितः ।

अहिर्बुध्न्यः ।

प्रसन्नोऽस्मि तवाद्यास्तु दर्शनं सफलं मम ॥ ४५ ॥
ब्रूहि नारद तत्त्वेन यत्ते मनसि वर्तते ।

(कालनेमिसंग्रामे नारदस्य सुदर्शनमहिमदर्शनम् )

श्रीनारदः ।

ता कामयसंकाशे संग्रामे कालनेमिनः ॥ ४६ ॥
संप्रवृत्ते जगद्धातुर्देवदेवस्य शार्ङ्गिणः ।
[illegible]ानवगन्धर्वयक्षरक्षोभयावहे ॥ ४७ ॥
मध्याह्नार्कसहस्राभश[illegible]संकुले ।
सुरासुरेन्द्रसैन्येषु निकृत्तेषु महास्त्रतः ॥ ४८ ॥
भीतविस्मितसंभूतहृतसंगतसंप्लुतैः ।
पिशाचप्रेतवेतालभूतसंघैः समाकुले ॥ ४९ ॥
उद्यन्तीष्वतिघोरासु ह्रादिनीष्वशनीषु च ।
देवदानवदेहेभ्यः क्षरद्भिः क्षतजैस्तथा ॥ ५० ॥
स्यन्दमानासु वेगेन स्यन्दिनीषु समन्ततः ।
विद्रुतैः सर्वतो भीतैर्हत[2]शेषैः सुरासुरैः ॥ ५१ ॥

1. संप्रीत D E.
2. हतिशिष्टैः F ; हतशिष्टैः E.

गरुडस्थे जगन्नाथे सुदर्शनकराम्बुजे ।
प्रादुश्चक्रे कालनेमिरस्त्रग्रामानशेषतः ॥ ५२॥
भृशाश्वतनया ये ते ये ते त्वन्मुखनिःसृताः ।
ये ते ब्रह्ममुखोद्भूता ये ते संवर्तकालजाः ॥५३॥
लोकपालोद्भवा ये ते ये ते पातालवासिनः ।
महाभूतमया ये ते ये ते वैकारिकोद्भवाः ॥५४॥
गुणत्रयमया ये ते ये ते गन्धर्वयोनयः ।
[1]रक्षोयक्षोद्भवा ये ते ये ते विद्याधराह्वयाः ॥५५॥
ये ते द्वन्द्वगुणोद्भूता ये ते शक्तिसमुद्भवाः ।
अथर्वाङ्गिरसा ये ते ये ते मन्त्रान्तरोद्भवाः ॥५६॥
सर्वकार्यकरा ये ते प्रवर्तकनिवर्तकाः ।
ऋषयः शक्तयो यास्ता ये ते [2]दण्डादिरूपकाः ॥५७॥
महाबला महावीर्याः त्रैलोक्यक्षपणोद्यताः ।
शैलेन्द्रसंनिभाः केचित्केचिन्नागेन्द्रसंनिभाः ॥५८॥
पारावारनिभाः केचित्केचिद्गगनसंनिभाः ।
ज्वलज्ज्वालाशतालीढा रोदसीमध्यवर्तिनः ॥५९॥
नृत्यन्तश्च हसन्तश्च क्ष्वेलन्तः पतयालवः ।
अनिर्देश्या अनौपम्या गौराः श्वेतारुणासिताः ॥६०॥
नानासंस्थानवर्णाश्च नानाविभ्रमरोचिषः ।
सर्वे संभूय संयत्ताः कालनेमिप्रचोदिताः ॥६१॥

---

1. यक्षरक्षोद्भवाः (!) A B C E F.
2. दग्धादि D.

(सर्वास्त्राणां सुदर्शनेन पराभवः)

सप्रयोगोपसंहारैः सरहस्यैश्च[1] संगतैः ।
अस्त्रग्रामैरशेषैस्तैर्नारायणकरोद्यते ॥ ६२ ॥
सुदर्शनमहावह्नौ संभूय शलभायितम् ।
पूर्णाहुतिरभूत्तस्मिन् कालनेमिर्महासुरः ॥ ६३ ॥

(अत्यद्भुतमहिमदर्शनात्संशयोदयः)

तं दृष्ट्वा विस्मयाविष्टः संग्रामं महदद्भुतम् ।
अन्तर्हितं क्षणात्कृष्णं प्रणिपत्य जगद्गुरुम् ॥ ६४ ॥
इमं संदेहसंदोहं हृदयेन वहन् गुरुम् ।
तवान्तिकमिह प्राप्तः संशयच्छेदनाय वै ॥ ६५ ॥
न हि सर्वज्ञमीशानं विना छेत्ताऽस्य विद्यते ।

अहिर्बुध्न्यः ।

देवर्षे संशयान् ब्रूहि ये वर्तन्ते तवान्तरे ॥ ६६ ॥
अप्यनिर्वचनीयास्ते सर्वांश्छेत्ताऽस्मि सांप्रतम् ।

दुर्वासाः

अथ प्रश्नान्क्रमेणोक्तान् नारदेन सुरर्षिणा[2] ॥ ६७ ॥
व्याचष्ट भगवान् शर्वः सर्वतः[3] प्रीतमानसः ।

(संहितावतरणम्)

संहिता सेयमाख्याता नानामन्त्रार्थ[4]गोचरा ॥ ६८ ॥

---

1. ॰स्त्रैः ससंग्रहैः D.
2. महर्षिणा D.
3. सर्वज्ञः A B C E F.
4. तंत्रार्थ D.

पञ्चरात्रमयी दिव्या नाम्नाऽहिर्बुध्न्यपूर्विका[1] ।
अर्थैः परकृतिप्रायैः पुराकल्पैश्च संयुता ॥६९॥
नानासिद्धान्तसंभेदा नानाविद्योपशोभिता[2] ।
शतद्वयमिहाध्यायाः चत्वारिंशच्च दर्शिताः ॥७०॥
ततो द्वापरवेलायां मनुष्याणां हिताय वै ।
अध्यायानां शतेनाथ विंशत्या च समन्विता ॥७१॥
अतिविस्तरमुत्सृज्य गुह्येन[3] प्रतिसंस्कृता ।
ततोऽपि बुद्धिसंकोचान्मनुष्याणां हिताय वै ॥७२॥
याति द्वापरसन्ध्यंशे व्यासस्यानुमतेर्मया[4] ।
षष्ट्यध्यायैरियं भूयः संहिता प्रतिसंस्कृता ॥७३॥
उपन्यास्थद्यथा प्रश्नं नारदो भगवानृषिः ।
निरुवाच यथा शर्वः तान् सर्वांस्त्वं निबोध मे ॥७४॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां संहितावतारो नाम

प्रथमोऽध्यायः

ओम् ।

(अस्मिन्नध्याये श्लोकाः चतुस्सप्ततिः ७४)

---

1. रूपिका A B C E.
2. शोभिनी C E F.
3. गुह्येन D.
4. मते मया D.

ओम् ।

# अथ षाड्गुण्यब्रह्मविवेको नाम द्वितीयोऽध्यायः ।

(अहिर्बुध्न्यं प्रति नारदप्रश्नः)

श्रीनारदः ।

मन्त्रग्रामानशेषान्यै[1]त्सूर्यवैश्वानरोपमान् ।
अनायासेन जग्राह हरेश्चक्रं सुदर्शनम् ॥ १ ॥
सांसिद्धिकप्रभावोऽयमस्य सांसर्गिकोऽपि वा ।
[2]किं तत्सुदर्शनं नाम कश्च शब्दार्थ उच्यते ॥ २ ॥

(अहिर्बुध्न्येन संकर्षणात् स्वस्य ज्ञानप्राप्तिकथनम्)

अहिर्बुध्न्यः ।

शृणु नारद तत्त्वेन यत्तज्ज्ञानमनुत्तमम् ।
वर्षायुतगणान् घोरं तपस्तप्त्वा मया पुरा ॥ ३ ॥
[3]प्राप्तं संकर्षणात्साक्षाद्विज्ञानबलवारिधेः ।
ब्रह्मादिषु यदन्येषु [4]न महर्षिषु विद्यते ॥ ४ ॥

---

1. यान् A B C.
2. क्व A B C F.
3. प्राप्तः A.
4. महर्षिषु न विद्यते A B C E F.

सुदर्शनस्वरूपं तत्प्रोच्यमानं मया शृणु ।
श्रुते यत्राखिलाधारे[1] संशयास्ते न सन्ति वै[2] ॥ ५ ॥

(परब्रह्मस्वरूपसंक्षेपः)

अनाद्यन्तं परं ब्रह्म यत्तदक्षरमव्ययम् ।
अनामरूपसंभेद्यमवाङ्मनसगोचरम् ॥ ६ ॥
सर्वशक्ति समस्ताख्यषाड्गुण्यमजरं[3] ध्रुवम् ।

(सुदर्शनशब्दार्थनिरूपणम्)

तस्य स्यामिति संकल्पो भावतोऽभावतोऽपि वा ॥ ७ ॥
स्वातन्त्र्याननुयोज्येन रूपेण परिवर्तते ।
यत्तत्प्रेक्षणमित्युक्तं[4] दर्शनं तत्प्रगीयते ॥ ८ ॥
वस्तुतः कालतो देशात्तस्य त्वव्याहतिर्हि[5] या ।
पूज्या[6] साऽत्र सुशब्दार्थस्तत्सुदर्शनमीर्यते ॥ ९ ॥

(सर्वस्य सुदर्शनाधीनत्वम्)

कारणं जगतो यत्तदाधारो जगतश्च यः[7] ।
प्रमाणं जगतो यत्तत्प्रमाणार्थोऽखिलश्च यः ॥ १० ॥
तत्राधिकारिणो ये च विभागा ये च तद्गताः ।

---

1. यंत्राखिलाधारे D.
2. ते E F.
3. समस्ताख्याषड्गुण्य D; समस्ताख्याषाड्गुण्य B; समस्ताख्यम् इति भवेत्.
4. प्रोक्षणम् A B C E F.
5. ॰त्वविहतिर्यथा E F.
6. पूजा इति सर्वत्र.
7. यत् D.

रक्षाविधिश्च यस्तस्य स च यस्य प्रकीर्तितः ॥११॥
सर्वं सुदर्शनायत्तं सुदर्शनमयं च यत् ।
इति सांसिद्धिकं रूपं तस्य सर्वातिशायि च ॥१२॥
अस्त्रग्रामेष्वशेषेषु यत्तत्सामर्थ्यमैश्वरम् ।
एतदीयमशेषं तदित्याप्तं स्वेन तत्स्वकम्[1] ॥१३॥

(पुनर्नारदकृताः सप्त प्रश्नाः)

श्रीनारदः ।

देवदेव जगन्नाथ लोकत्रितयशंकर ।
विमुह्यतीव चित्तं मे संशयो बहुलीकृतः ॥१४॥
षाड्गुण्यं किं परं ब्रह्म किंप्रकारं[2] च तद्भवेत् ।
संकल्पः कीदृशस्तस्य कथं दर्शनताऽस्य च ॥१५॥
कथं चाविहतिस्तस्य सर्वदेशा[3]तिगोचरा ।
किं कारणं च जगतः कीदृशं किंविधं च तत् ॥१६॥
को वा जगत आधारः कीदृक्कतिविधश्च सः ।
किं तत्प्रमाणमित्युक्तं कीदृक्कतिविधं च तत् ॥१७॥
प्रमाणार्थश्च को नाम कीदृक्कतिविधश्च सः ।
के तेऽधिकारिणो नाम कीदृशाः किंविधाश्च ते ॥१८॥
सर्वस्यास्य च का रक्षा तद्विधिः कश्च किंविधः ।
कश्च तत्राधिकार्यार्थः स च किंगुण इष्यते ॥१९॥

---

1. इत्याप्तस्वेन तत्स्वकम् इति सर्वत्र पाठः
2. किंप्रकारश्च A B C.
3. देवातिगोचरा A B C D.

एतन्मे भगवन् ब्रूहि प्रश्नजातमशेषतः ।
उपसंगृह्य चरणावुपसन्नोऽस्म्यधीहि भोः ॥२०॥

दुर्वासाः ।

ततो दर्शनपूताय प्रणिपत्याभियाचते ।
उपसन्नाय मुनये सर्वं व्याचष्ट शंकरः ॥२१॥

(विस्तरेण परब्रह्मस्वरूपनिरूपणम् )

अहिर्बुध्न्यः ।

एकं निर्दुःखनिःसीमसुखानुभवलक्षणम् ।
अनाद्यन्तं परं ब्रह्म नारायणमनामयम् ॥२२॥
सर्वभूतकृतावासं सर्वं व्याप्य व्यवस्थितम् ।
निरवद्यमविक्षिप्तमतरङ्गार्णवोपमम् ॥२३॥

(ब्रह्मणः हेयप्रतिभटत्वं कल्याणगुणाकारत्वं च)

अप्राकृतगुणस्पर्शमप्राकृतगुणास्पदम् ।
भवोदधेः परं पारं निष्कलङ्कं निरञ्जनम् ॥२४॥
आकाराद्देशतः कालादनवच्छेदयोगतः ।
पूर्णं नित्योदितं व्यापि हेयोपादेयतोज्झितम् ॥२५॥
इदमीदृगियत्ताभिरपरिच्छेद्यमञ्जसा ।

(परब्रह्मणः परमात्मादिसकलशब्दवाच्यत्वम्)

उपर्युपरि तत्त्वानां पूर्वपूर्वात्मभाविनाम् ॥२६॥
पारम्येणात्मभावित्वात्परमात्मा प्रकीर्तितः ।
ओमित्यापन्नयोगेन सर्वतत्त्वप्रवेशात: ॥२७॥

---

1. प्रवेशितः A B C.

षाड्गुण्यगुणयोगेन भगवान् परिकीर्तितः ।
समस्तभूतवासित्वाद्वासुदेवः प्रकीर्तितः ॥२८॥
आप्नोति [1]जगदित्येवमात्मत्वेन निरूपितः ।
रूपात्प्रकारतोऽव्यक्तेरव्यक्तः परिगीयते ॥२९॥
सर्वप्रकृतिशक्तित्वात्सर्वप्रकृतिरीरितः ।
प्रधीयमानकार्यत्वा[2]त्प्रधानः परिगीयते ॥३०॥
नेतृत्वादनितृत्वाच्च नित्य इत्यपि पठ्यते ।
अननाददनाच्चापि ह्यनन्तः परिपठ्यते ॥३१॥
परितो मित्यभावाच्च प्रोक्तोऽपरिमितो बुधैः ।
अक्षयादक्षरः प्रोक्तो ह्यरिष्टोऽरिष्टवर्जनात् ॥३२॥
अविकार्यस्वभावत्वादव्याप्यत्वात्तथाऽच्युतः ।
रागादिदोषनिर्मुक्तेः समधीगोचरत्वतः ॥३३॥
सर्वोपादानतासाम्यात्समः संपरिकीर्तितः ।
ध्यानवर्त्मबहिर्भावात्स्वभावाननुयोगतः ॥३४॥
इयत्तयाप्यचिन्त्यत्वादचिन्त्यः परिकीर्तितः ।
जगन्ति प्रभवन्त्यस्मात्सर्वत्र प्रभवत्यपि ॥३५॥
प्रकृष्टश्च भवो यस्मात्प्रभवः परिकीर्तितः ।
सर्वप्रलयभूमित्वादव्ययो व्ययनाशनात् ॥३६॥
बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेति श्रुतिगह्वरे ।
कपिलः श्रेष्ठविद्यत्वात्तेजिष्ठत्वाच्च कापिलः ॥३७॥

---

1. मितमित्येवम् E.
2. कारित्वात्प्रधानं D.

हितश्च रमणीयश्च गर्भो हृदयनामवान् ।
हिरण्यगर्भ इत्येवं योगिभिः समुदाहृतः ॥३८॥
अपनाशतपोयोगादपान्तरतपाः श्रुतः ।
शिवंकरतया प्रोक्तः शिवः पाशुपते स्थितैः[1] ॥३९॥
अदूरविप्रकर्षस्थैर्वस्तुतोऽनवगाहिभिः ।
इत्येवमादिभिः शब्दैः तत्त्वं तदुपलक्ष्यते ॥४०॥

(प्रतिबन्धविगमे ब्रह्मानुभवसंभवः)

अनेकजन्मसंसिद्धं[2]पुण्यपापपरिक्षये ।
निकृत्ते वासनाजाले सम्यग्विज्ञानशास्त्रतः ॥४१॥
त्रैगुण्योपरमे[3] तत्तु स्वेनानुभवितुं क्षमम् ।
साक्षादिदमिति[4] व्यक्तं वाचा वक्तुं न शक्नुमः ॥४२॥

(ब्रह्मणः स्वप्रयत्नलभ्यत्वविरहः)

संवत्सरसहस्राणि पक्षिराडिव संपतन् ।
नैवान्तं कारणस्यैति यद्यपि स्यान्मनोजवः ॥४३॥
उपर्युपरि गच्छन्तो विशिक्षन्त[5]स्तथा तथा ।
ज्ञानोद्यमदशायास्ते न व्यक्तिमधिकां गताः ॥४४॥
तत्र सर्वाणि तत्त्वानि निषीदन्ति परात्मनि ।
भावाभावावुभौ प्रोतौ ज्ञानसूत्रमयात्मना ॥४५॥

---

1. शिवश्शिवङ्करतया प्राप्तः पाशुपतस्थितैः D.
2. संसिद्धैः इति सर्वत्र.
3. त्रैगुण्योपरमो यत्तत् B C.
4. इदमतिव्यक्तम् A B C E F.
5. विशिङ्खन्तः A B C E F; विशिक्षन्त इति पाठे परस्मैपदं चिन्त्यम्.

(ब्रह्मणः त्रिविधपरिच्छेदशून्यत्वम्)

सर्वप्रत्यक्षदर्शित्वात्[1]सर्वात्मा तत्परं पदम् ।
अतीतानागते काले मध्यतः प्रतिसंहृते[2] ॥४६॥
वर्तमानं न तद्ब्रह्म नातीतं नैव भावि तत् ।
अग्रतः पृष्ठतो नैव नोर्ध्वतः[3] पार्श्वयोर्द्वयोः ॥४७॥
न कल्माषं न विकलं न कृष्णं न च पिङ्गळम् ।
न सारङ्ग[4]पिशङ्गं न कपिलं नारुणं न च ॥४८॥
[न बभ्रु नकुलं नैव न श्यामं न च रोहितम् ।
न दीर्घं नैव च ह्रस्वं न स्थूलं नैव चाप्यणु ॥४९॥
न वृत्तं नाप्यपावृत्तं नाश्रितं तदनाश्रितम् ।
नैव भावो न चाभावस्तद्भावाचिंतये न च[5]][6] ॥५०॥
न शीतं नापि चैवोष्णं नानुष्णाशीतमप्युत ।
न दुःखं न सुखं नैव निर्दुःखं सुखमव्रणम् ॥५१॥
न मूलं नापि तन्मध्यं नैवान्तं कस्यचिन्मुने ।
न शेते तन्न चैवास्ते न तिष्ठति न गच्छति ॥५२॥
सर्वद्वन्द्वविनिर्मुक्तं सर्वोपाधिविवर्जितम् ।
षाड्गुण्यं तत्परं ब्रह्म सर्वकारणकारणम् ॥५३॥

---

1. सर्वप्रत्ययमर्शित्वात् E F.
2. संहृतम् A B C.
3. नोर्ध्वाधः B.
4. न सारङ्गम् D E.
5. अयमेव पाठः 6. इदं श्लोकद्वयं D पुस्तक एव दृश्यते.

श्रीनारदः ।

किं तत्षाड्गुण्यमित्युक्तं देवदेव जगत्पते ।
कथं च गुणहीनं तत्षाड्गुण्यं परिगीयते ॥५४॥

(ब्रह्मणः षाड्गुण्यप्रपञ्चनम्)

अहिर्बुध्न्यः ।

अप्राकृतगुणस्पर्शं निर्गुणं परिगीयते ।
शृणु नारद षाड्गुण्यं कथ्यमानं मयाऽनघ ॥५५॥

(तत्र ज्ञानस्वरूपनिरूपणम्)

अजडं स्वात्मसंबोधि नित्यं सर्वावगाहनम् ।
ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः ॥५६॥

(ब्रह्मणो ज्ञानस्वरूपत्वं ज्ञानगुणकत्वं च)

स्वरूपं ब्रह्मणस्तच्च गुणश्च[1] परिगीयते ।

(शक्तिस्वरूपनिरूपणम्)

जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिता ॥५७॥

(ऐश्वर्यस्वरूपनिरूपणम्)

कर्तृत्वं नाम यत्तस्य स्वातन्त्र्यपरिबृंहितम् ।
ऐश्वर्यं नाम तत्प्रोक्तं गुणतत्त्वार्थचिन्तकैः ॥ ५८ ॥

(बलस्वरूपनिरूपणम्)

श्रमहानिस्तु या तस्य सततं कुर्वतो जगत् ।
बलं नाम गुणस्तस्य कथितो गुणचिन्तकैः[2] ॥ ५९ ॥

---

1. गुणं च इति सर्वेषु कोशेषु.

(वीर्यस्वरूपनिरूपणम्)

तस्योपादानभावेऽपि विकारविरहो हि यः ।
वीर्यं नाम गुणः सोऽयमच्युतत्वापराह्वयम् ॥६०॥

(तेजःस्वरूपनिरूपणम्)

सहकार्यनपेक्षा या तत्तेजः समुदाहृतम् ।

(शक्त्यादिगुणपञ्चकस्य ज्ञानगुणप्रकारत्वम्)

एते शक्त्यादयः पञ्च गुणा ज्ञानस्य कीर्तिताः ॥६१॥
ज्ञानमेव परं रूपं ब्रह्मणः परमात्मनः ।
षाड्गुण्यं तत्परं ब्रह्म स्वशक्तिपरिबृंहितम् ।
बहु स्यामिति सङ्कल्पं भजते तत्सुदर्शनम् ॥६२॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
षाड्गुण्यब्रह्मविवेको नाम द्वितीयोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १३६)

---

ओम् ।

## अथ वैश्वरूप्यसंक्षेपो नाम तृतीयोऽध्यायः ।

श्रीनारदः ।

षाड्गुण्यं तत्कथं ब्रह्म स्वशक्तिपरिबृंहितम् ।
तस्य शक्तिश्च का नाम यया बृंहितमुच्यते ॥ १ ॥

(सर्ववस्तूनां शक्तिरपृथक्सिद्धविशेषणम् )

अहिर्बुध्न्यः ।

शक्तयः सर्व[1]भावानामचिन्त्या अपृथक्स्थिताः ।
स्वरूपे नैव दृश्यन्ते दृश्यन्ते कार्यतस्तु ताः ॥ २ ॥
सूक्ष्मावस्था हि सा तेषां सर्वभावानुगामिनी ।
[2]इदन्तया विधातुं सा न निषेद्धुं च शक्यते ॥ ३ ॥

(शक्तीनामपर्यनुयोज्यत्वम् )

सर्वैरननुयोज्या हि शक्तयो भावगोचराः ।

(परब्रह्मणोऽपि शक्तिरपृथक्सिद्धविशेषणम् )

एवं भगवतस्तस्य परस्य ब्रह्मणो मुने ॥ ४ ॥
सर्वभावानुगा शक्तिर्ज्योत्स्नेव हिमदीधितेः ।

1. सन्ति भावानाम् B D E F.
2. इयत्तया A B C.

भावाभावानुगा तस्य सर्वकार्यकरी विभोः ॥ ५ ॥
स्वातन्त्र्यरूपा सा विष्णोः प्रस्फुरत्ता[1] जगन्मयी ।
उदितानुदिताकारा निमेषोन्मेषरूपिणी ॥ ६ ॥

(भगवच्छक्तेरानन्दादिशब्दाभिधेयत्वम्)

निरपेक्षतयाऽऽनन्दा स्वतन्त्रा नित्यपूरणात् ।
स्वात्मभित्तिसमुन्मीलत्परावर[2]जगत्स्थितिः ॥७॥
नित्या कालापरिच्छेदात्पूर्णाऽऽकारवियोगतः ।
व्यापिनी देशविभ्रंशाद्रिक्ता पूर्णा च सर्वदा ॥८॥
जगत्तया लक्ष्यमाणा सा लक्ष्मीरिति गीयते[3] ।
श्रयन्ती वैष्णवं भावं सा श्रीरिति निगद्यते ॥९॥
अव्यक्तकालपुंभावात्सा[4] पद्मा पद्ममालिनी ।
कामदानाच्च कमला पर्याप्तसुखयोगतः ॥१०॥
विष्णोः सामर्थ्यरूपत्वाद्विष्णुशक्तिः प्रगीयते ।
पालयन्ती हरेर्भावं विष्णुपत्नी प्रकीर्तिता ॥११॥
जगदाकारसंकोचात् स्मृता कुण्डलिनी[5] बुधैः ।
अनाहता बुधैः प्रोक्ता मनोवागाद्यनाहतेः ॥१२॥

---

1. सर्वेष्वपि कोशेष्वयमेव पाठः.
2. परात्पर A B C E F.
3. जगत्ता वक्ष्यमाणा सा लक्ष्मीरिति निगीर्यते A; जगत्तया वक्ष्यमाणा सा लक्ष्मीरिति गीयते B C E F.
4. पुंभावा सा C.
5. कुड्मलिनी इत्यपि B पुस्तके पाठः.

परमानन्दसंबोधा[1] मन्त्रसूक्ष्मतयाऽपि च ।
शुद्धसत्त्वाश्रया[2]द्गौरी ह्यदितिश्चाविशेषणात् ॥१३॥
सर्वपुण्यकरी भावान्महीयस्यपि सा मही ।
तथाऽनाहतशीर्ष्णी च नाहतोऽभ्युदयो यतः ॥१४॥
प्राणयन्ती[3] स्वसंवित्त्या जगत्प्राणा इतीर्यते ।
[4]पराहतौघरूपत्वान्मन्त्रमाता प्रकीर्तिता ॥१५॥
त्रायन्ती गायतः सर्वान् गायत्रीत्यभिधीयते ।
प्रकुर्वन्ती जगत्स्वेन प्रकृतिः परिगीयते ॥१६॥
मिमीते च तता चेति सा माता परिकीर्तिता ।
सर्वेषामविपर्यासाच्छिवंकरतया शिवा ॥१७॥
तरुणी काम्यमानत्वात्तारा [5]संसारतारणात् ।
अविपर्यासरूपत्वात्सत्या सत्यद्वयान्वयात् ॥१८॥
शान्ताशेषविकारत्वाच्छान्ता सा चिन्त्यते बुधैः ।
मोहानपनयन्ती सा मोहिनी मोहनादपि ॥१९॥
इडा हविरधिष्ठानादिष्यमाणतयाऽपि च ।
रमयन्तीति सा रन्ती रतिश्च परिकीर्तिता ॥२०॥

---

1. संबोधात् E F.
2. °श्रया गौरी A B C E F.
3. प्राणयन्त्या E F.
4. पराहतोस्व D; पराहतोघ A B C E F.
5. साधारतारणात् D.

विश्रुतिर्[1]विश्रुता सद्भिः [2]स्मारयन्ती सरस्वती ।
अनवच्छिन्नभासत्वान्महाभासाऽभिधीयते ॥ २१ ॥
नामधेयैरियं तैस्तैर्नानाशास्त्रसमाश्रयैः ।
[3]अन्वर्थैर्दर्शिताशेषवि[4]भवा वैष्णवी परा ॥ २२ ॥
उदधेरिव च स्थैर्यं महत्त्वेव विहायसः ।
प्रभेव दिवसेशस्य ज्योत्स्नेव हिमदीधितेः ॥ २३ ॥
विष्णोः सर्वाङ्गसंपू[5]र्णा भावाभावानुगामिनी ।
शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसंमता ॥ २४ ॥

(शक्तिमतः शक्तिर्भिन्ना)

देवाच्छक्तिमतो भिन्ना [6]ब्रह्मणः परमेष्ठिनः ।
एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः ॥ २५ ॥
भवद्भावस्वरूपेण तत्त्वमेकमिवोदितौ ।
स्वातन्त्र्येण स्वरूपेण विष्णुपत्नीयमद्भुता ॥ २६ ॥
यतो जगद्भविष्यन्ती क्वचिदुन्मेषमृच्छति ।
सहस्रायुतकोट्योघकोटिकोट्यर्बुदांशकः ॥ २७ ॥

---

1. विश्रुतेर्विश्रुता E F.
2. सारयन्ती E ; साधयन्ती F.
3. अनल्पैः D.
4. विभावा D E.
5. संभूता D.
6. ब्रह्मणा परमेष्ठिना E.

(सामान्यतो भगवच्छक्तेर्द्वैविध्यम्)

लक्ष्मीमयः समुन्मेषः स द्विधा व्यवतिष्ठते ।
क्रियाभूतिविभेदेन

(भूतिशक्तेस्त्रैविध्यम्)

भूतिः सा च त्रिधा मता ॥२८॥
अव्यक्तकालपुंभावात्[1] तेषां रूपं प्रवक्ष्यते ।

(क्रियाशक्तेः भूतिशक्तिप्रवर्तकत्वम्)

क्रियाख्यो योऽयमुन्मेषः[2] स भूतिपरिवर्तकः ॥२९॥
लक्ष्मीमयः प्राणरूपो विष्णोः संकल्प उच्यते ।
स्वातन्त्र्यमूल इच्छात्मा प्रेक्षारूपः क्रियाफलः ॥३०॥
उन्मेषो यः सुसंकल्पः सर्वत्राव्याहतः कृतौ ।
अव्यक्तकालपुंरूपां चेतनाचेतनात्मिकाम् ॥३१॥
भूतिं लक्ष्मीमयीं विष्णोः शक्तिं संभावयत्यसौ ।
अव्यक्तं परिणामेन कालं कलनकर्मणा ॥३२॥
पुरुषं भोजनोद्योगैः[3] सर्गे संयोजयत्ययम् ।
सामर्थ्यात्त्रितयादानाद्वियोजयति संचरे ॥३३॥
विषमे परिणामे यत्सामर्थ्यं त्रिगुणात्मनः ।
स्रष्टौ दधाति तत्तस्मिन् विपर्यासं च संहृतौ ॥३४॥

---

1. भावम् D.
2. योऽन्य उन्मेष D.
3. भोजनोद्वेगैस्सर्गस्सं° D.

व्यक्तपुरुषोद्योगसंयोजनविधिक्रमम् ।
द्धाति सर्गादौ विपर्यासं च संहृतौ ॥३५॥
सश्च [1]बुद्धिसामर्थ्यमसामर्थ्यं च भोजने ।
कल्पः कुरुते विष्णोः सर्गप्रतिविसर्गयोः ॥ ३६ ॥
नेतान् संहतान् सृष्टौ विहतान् प्रतिसंचरे ।
धाति स्वेन रूपेण [2]गुणो मणिगणानिव ॥ ३७ ॥
स्थितौ च कुरुते रक्षां तेषां कार्यसमीक्षणात् ।
र्वत्राव्याहतत्वं यत्तत्सुदर्शनलक्षणम् ॥ ३८ ॥

(क्रियाशक्तेर्वैविध्येन सर्वभावानुयायित्वम्)

सुदर्शनं नाम [3]संकल्पः स्पन्दनात्मकः[4] ।
वेभज्य बहुधा रूपं भावे भावेऽवतिष्ठते ॥ ३९ ॥

(वैविध्यप्रपञ्चनम्)

याप्तिं सुदर्शनस्येमां प्रोच्यमानां मया शृणु ।
ज्ज्ञात्वा पुरुषो लोके कृतकृत्यत्वमश्नुते ॥ ४० ॥
ाड्गुण्यं यत्परं ब्रह्म या गतिर्योगिनां परा ।
नारायणः स विश्वात्मा भावाभावमिदं जगत् ॥ ४१ ॥

---

1. भुक्ति B D E.
2. गुणे E F.
3. संकल्पास्प° A B C.
4. °त्मन: E F.
5. प्राप्तिं A B C.

निष्कलेन स्वरूपेण [1]यदा प्राप्य नियच्छति ।
[2]सदा सत्ता हि या तस्य जगन्निर्माणशक्तिका ॥ ४२ ॥
सर्वभावात्मिका लक्ष्मीरहंता पारमात्मिका ।
तद्धर्मधर्मिणी देवी भूत्वा सर्वमिदं जगत् ॥ ४३ ॥
निष्कलेन स्वरूपेण साऽपि [3]तद्वन्नियच्छति ।
तदीयैका [4]कला भूतिर्जगद्भवनसंज्ञिता[5] ॥ ४४ ॥
व्यापारो वास्तवस्तत्र जगन्नियमनात्मकः ।
निष्कला या क्रियाशक्तिर्लक्ष्म्याः सौदर्शनी कला ॥
भजेते तौ यदा रूपं मनोनयननन्दनम् ।
रक्षायै जगतामीशौ चक्रपद्मे तदा क्रिया ॥ ४६ ॥
रक्षोपकरणं देवौ तौ यावद्यावदिच्छतः ।
शङ्खशार्ङ्गादिरूपेण तावत्तावत्सुदर्शनम् ॥ ४७ ॥
[6]प्रकाशाह्लादपाकैर्यद्विश्वस्योपचिकीर्षतः ।
सूर्येन्दुवह्निरूपेण तदा चक्रं सुदर्शनम् ॥ ४८ ॥
देवदैत्यादिकान् भावान् यदा तौ भजतः स्वयम् ।
तत्तदस्त्रमयी देवी तदा सौदर्शनी क्रिया ॥ ४९ ॥
यदा विश्वोपकाराय शास्त्रं नानाफलाश्रयम् ।
कुरुतः सा क्रिया तत्र शासनं हृदयस्थितम् ॥ ५० ॥

---

1. यदाज्ञाप्य D.
2. सदसत्ता हि A B C.
3. तत्त्वं नि° A B C E F.
4. काल A B C E F.
5. संज्ञिका A B C E F.
6. प्रतापा° D.

यदा तौ भवतः शास्त्रं विश्वोपकृतये विभू[1] ।
तदा सा[2] शास्त्रतात्पर्यक्रिया सौदर्शनी कला ॥ ५१ ॥
शास्त्राधिकारिणो[3] नाम यदा [4]तौ पितरौ ध्रुवौ ।
अधिकारस्तदा तेषां क्रियाशक्तिः सुदर्शनम् ॥ ५२ ॥
यदा शास्त्रार्थभूतौ तौ फलसाधनसंश्रयात्[5] ।
फलप्रसवसामर्थ्यं[6] क्रिया तत्र सुदर्शनम् ॥ ५३ ॥
पुरुषार्थास्तु चत्वारो यदा तौ भवतः[7] स्वयम् ।
आत्मतर्पणसामर्थ्यं तदा चक्रं सुदर्शनम् ॥ ५४ ॥
यदा मन्त्रमयीं रक्षां भजतो जगतां हिते ।
मन्त्रयन्त्रमयी देवी क्रियाशक्तिस्तदा त्वियम् ॥ ५५ ॥
वैश्वरूप्यस्य संक्षेपः क्रियाशक्तेः प्रदर्शितः ।
सुदर्शनात्मिकायास्ते किं भूयः श्रोतुमिच्छसि ॥ ५६ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां क्रियाशक्तेवैंश्वरूप्य-
प्रदर्शनं नाम तृतीयोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १९२)

---

1. विभो A; विभोः B; विभूः D.
2. तु B.
3. ॰कारिणौ A B C E F.
4. तावितरौ A B C.
5. संश्रयान् D.
6. सामर्थ्या A B C.
7. भजतः D.

ओम् ।

## अथ प्रतिसंचरवर्णनं नाम चतुर्थोऽध्यायः ।

श्रीनारदः ।

भगवन् देवदेवेश सर्वज्ञ वृषकेतन ।
किं तत्कारणमित्युक्तं स्रष्टये यत्प्रवर्तते[1] ॥१॥
सुदर्शनेन यद्व्याप्तं रूपतः कार्यतोऽर्थतः ।
विस्तरेण ममाचक्ष्व जगतः कारणं परम् ॥२॥

(प्राकृतप्रलयवर्णनम् )

अहिर्बुध्न्यः ।

प्रोच्यमानं मया तत्त्वं कारणस्यावधारय ।
तत्र तावन्निबोधेमं प्राकृतं प्रतिसंचरम् ॥३॥
येन कालेन सा विद्या प्रकृतिर्मूल[2]संज्ञिता ।
सस्यादिसृष्टये धेनुरभवन्मेघरूपिणी ॥४॥
कालेन तावता सा तु चिकीर्ष्ये प्रतिसंचरे ।
अधेनुर्नीरसा शुष्का भवत्यव्यक्तसंज्ञिता ॥५॥

---

1. तत्प्रवर्तते D.
2. स्थूल A B C E F.

श्रीनारदः ।

कालेन कियता[1] सर्गः सा धेनुः कामरूपिणी ।
अधेनुः सा भवेद्देवी यावता प्रतिसंचरे ॥६॥[2]

(प्रतिसंचरकालपरिमाणम्)

अहिर्बुध्न्यः ।

अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादश स्मृतः ॥७॥
ते तु पञ्चदशाहः स्यात्तावती रात्रिरिष्यते ।
ते[3] पञ्चदश पक्षः स्यात्पक्षौ द्वौ मास ईष्यते[4] ॥८॥
संवत्सरो मानुषस्तु तैर्द्वादशभिरिष्यते ।
काम्यः षोडशभिस्तैस्तु काम्याब्दानां तथा[5] मुने ॥

\+ + + + + + + +[6]

विद्या धेनुरधेनुश्च भवेत् कालेन तावता ।
अधेन्वां तु ततस्तस्यां चिकीर्ष्ये प्रतिसंचरे ॥१०॥

(सर्वस्य पृथिव्यां लयः)

नीरसं शुष्कमेवासीज्जगदेतच्चराचरम् ।
महावातेन संशुष्कं संदग्धं च[7] महाग्निना ॥११॥

---

1. क्रियते इति सर्वत्र.
2. अयं श्लोकः D पुस्तके न दृश्यते.
3. सर्वेषु पुस्तकेष्वयमेव पाठः.
4. उच्यते E F. 5. तु यन्मुने D.
6. अत्र कियानपि ग्रन्थः पतितो भवेत्.
7. तन्महाग्निना E; तन्महात्मना F.

आशैलादातृणाच्चैव यदा भूमौ स[illegible]न्नतम् ।
मानवेषु लयं यान्ति [1]तदा मानवमानवाः ॥१२॥
मनुष्वेव लयं यान्ति मानवास्ते चतुःशतम् ।
एवं चेतनवर्गे तु मनुष्वेव लयं गते ॥१३॥
मिथुनान्येव चत्वारि मनूनां केवलानि तु ।
कूर्मपृष्ठसमानायां भुवि तिष्ठन्ति वै मुने ॥१४॥

(पृथिव्या अप्सु लयः)

नारायणस्य संकल्पादव्याहतसुदर्शनात् ।
भूमेर्गन्धात्मकं सारं ग्रसन्त्यापस्तदा मुने ॥१५॥
आत्तगन्धा यदा भूमिरम्भसा [2]कारणात्मना ।
अतिभूय तदा पृथ्वीं मनवोऽप्सु व्यवस्थिताः ॥१६॥
[3]भूमिस्त्वात्तरसा शश्वज्जहाति व्यक्तिना[illegible]नी ।
[4]प्रभवन्त्याप एतर्हि जगदेतच्चराचर[illegible] ॥१७॥

(अपां तेजसि लयः)

संकल्पादेव पूर्वस्मात्सुदर्शनमयाद्धरेः ।
अपामपि रसं सारं ज्योतिर्ग्रसति कारणम् ॥१८॥
अतिभूय तदाऽऽपस्तु मनवो ज्योतिषि स्थिताः ।
आपश्चात्तरसाः शश्वज्जहति व्यक्तिनामनी ॥१९॥

---

1. तदेत्यादि पादद्वयं B C पुस्तकयोर्न दृश्यते.
2. करणात्मना A.
3. आत्तगन्धा च सा भूमिः जहाति व्यक्तिनामनी D.
4. संभवन्त्यप एतर्हि A B C; संभवन्त्याप एतर्हि E F.

देदीप्यमानमेतर्हि ज्योतिरेव जगन्मुने ।

(तेजसो वायौ लयः)

संकल्पचोदितो विष्णोर्वायुः कारणसंज्ञितः ॥२०॥
ज्योतिषोऽप्यान्तरं रूपं सारं ग्रसति तद्ध्रुवम् ।
संकल्पचोदिता[1] विष्णोर्मनवोऽपि तदा मुने ॥२१॥
अतिभूयाखिलं ज्योतिर्वायुमेव श्रयन्ति ते ।
आत्तरूपं तदा ज्योतिर्जहाति व्यक्तिनामनी ॥२२॥
वायुर्दोधूयमानस्तु जगदेतच्चराचरम् ।

(वायोराकाशे लयः)

ततः कारणमाकाशं विष्णोः संकल्पचोदितम् ॥२३॥
सारं ग्रसति संस्पर्शं कारणं वै नभस्वतः ।
सुदर्शनेरिता विष्णोर्मनवोऽपि महामुने ॥२४॥
नभस्येवावतिष्ठन्ते व्यतिभूय समीरणम् ।
आत्तस्पर्शस्तदा वायुर्जहाति व्यक्तिनामनी ॥२५॥
भृशं शब्दायमानं तद्वियद्विश्वं चराचरम् ।

(आकाशस्याहंकारे लयः)

क्रियाशक्तीरितो विष्णोरहंकारोऽभिमानवान् ॥२६॥
सारं ग्रसति शब्दाख्यं कारणं नभसो मुने ।
तयैव प्रेरिता विष्णोरतिभूय वियत्पदम् ॥२७॥
अहंकारेऽवतिष्ठन्ते मनवो भगवन्मयाः ।
आत्तशब्दं वियत्तच्च जहाति व्यक्तिनामनी ॥२८॥

1. चोदितो A B C.

अहमित्येव तद्विश्वमहंकारात्मकं मुने ।

(अहंकारस्य बुद्धौ लयः)

अभिमानात्मकं सारमहंकारस्य[1] कारणम् ॥२९॥
सुदर्शनेरिता विष्णोर्बुद्धिर्ग्रसति वै मुने ।
सुदर्शनेरिता विष्णोरतिभूय त्वहंकृतिम् ॥३०॥
बुद्धावेवावतिष्ठन्ते मनवोऽष्टौ महामुने ।
आत्ताभिमानोऽहंकारो जहाति व्यक्तिनामनी ॥३१॥
बुद्धिरेवेदमखिलं व्यवसायवती मुने ।

(बुद्धेस्तमसि लयः)

सारमध्यवसायाख्यं बुद्धेः कारणमव्ययम् ॥३२॥
सुदर्शनेरितं विष्णोस्तमो ग्रसति कारणम् ।
सुदर्शनेरिता विष्णोर्मनवोऽपि महामुने ॥३३॥
अतिभूय तदा बुद्धिं तमस्येव श्रिताः स्थितिम् ।
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ॥३४॥
अप्रतर्क्यमविज्ञेयं संस्तब्धं गुरु मोहनम् ।

(इन्द्रियाणां भूतैः सह तत्तत्कारणेषु लयः)

घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम् ॥३५॥
पायूपस्थं तथा पादौ हस्तौ वाक्चैव पञ्चमी[2] ।
द्वयोः पञ्चकयोर्द्वन्द्वं घ्राणपाय्वादिकं क्रमात् ॥३६॥

---

1. सारमभिमानस्य A B C D.
2. पञ्चमम् A B C E F.

महीजलादिभिर्हेतौ लीयमानैः[1] स्वके स्वके ।
समं विलयमायाति सह घ्राणादि[2]वृत्तिभिः ॥३७॥
मनोऽहंकार इत्येतत्सवृत्ति करणद्वयम् ।
अहंकारे लयं याति बुद्धौ बोधनमिन्द्रियम् ॥३८॥
तम एवेदमखिलमिदानीमवतिष्ठते ।

(तमसो रजसि लयः)

स्थितिशक्तिर्हि या चा[3]स्य तमसो गुरुतामयी ॥३९॥
रजो ग्रसति तां शश्वदीश्वरेच्छाप्रचोदितम् ।
इच्छया प्रेरिता विष्णोर्मनवोऽपि महामुने ॥४०॥
रजस्येवावतिष्ठन्ते व्यतिभूय तमोगतिम् ।
आत्तसारं तमस्तत्तु जहाति व्यक्तिनामनी ॥४१॥
चलक्रियात्मकं दुःखं रज एव जगत्तदा ।

(रजसः सत्त्वे लयः)

या सा स्पन्दमयी शक्तिश्चलै[4]त्तात्मा रजोमयी ॥४२॥
तां वै सुदर्शनादिष्टं सत्त्वं ग्रसति कारणम् ।
रजःस्था मनवश्चैव विष्णुसंकल्पचोदिताः ॥४३॥
अतिभूय रजः सत्त्वं विशन्ति विमलं मुने ।
आत्तसारं रजस्तत्तु जहाति व्यक्तिनामनी ॥४४॥

---

1. लीयमाने E F.
2. प्राणादि A B C D.
3. तस्य D.
4. चलतात्मा A B C D F G; चलितात्मा E.

लघु प्रकाशकं सत्त्वमिदमासीच्चराचरम् ।

(सत्त्वस्य काले लयः)

कालो नाम गुणो विष्णोः सुदर्शनसमीरितः ॥४५॥
सारं प्रज्ञामयं[1] सत्त्वादादत्ते ज्ञानकारणम् ।
अतिभूय तदा सत्त्वं मनवः कालसंश्रिताः ॥४६॥
काल एव जगत्कृत्स्नमिदमासीत्तदा मुने ।
आत्तसारं च तत्सत्त्वं जहाति व्यक्तिनामनी॥ ४७॥

(कालस्य नियतौ लयः)

काली कालगता शक्तिः या साऽशेषप्रकालिनी।
नियतिर्नाम तां तत्त्वं ग्रसतीश्वरचोदिता ॥४८॥
[2]सुदर्शनेरितास्ते च मनवोऽष्टौ महामुने ।
अतीत्य कालतत्त्वं तां नियतिं प्रतिपेदिरे ॥४९॥
आत्तसारस्तदा कालो जहाति व्यक्तिनामनी ।
नियतिर्नाम सा विश्वमिदमासीच्चराचरम् ॥५०॥

(नियतेः शक्तौ लयः)

महाविद्यामयी शक्तिर्नियतोर्ध्वं महामुने ।
शक्तिर्नाम तदा तां तु ग्रसतीश्वरचोदिता ॥५१॥
मनवोऽपीश्वरादिष्टा नियतिं तामतीत्य वै ।
शक्तिं मायामयीं विष्णोर्विशन्ति विपुलात्मिकाम् ॥

---

1. प्रख्यामयमिति सर्वत्र.
2. इत आरभ्य श्लोकत्रयं D पुस्तकव्यतिरिक्तेषु भ्रान्त्या त्यक्तमिति विभाति.

नियतिश्चाऽऽत्तसारा सा जहाति व्यक्तिनामनी ।
अथ शक्तिरिदं विश्वं जगदासीच्चराचरम् ॥५३॥

(शक्तेः कूटस्थपुरुषे लयः)

आचैतन्योन्मिषत्तायाः शक्तेः शक्तिः सनातनी ।
सुदर्शनेरितस्तां तु पुरुषो ग्रसति स्वयम् ॥५४॥
अतीत्य मनवः शक्तिं तं विशन्तीश्वरेरिताः ।
आत्तसारा तदा शक्तिर्जहाति व्यक्तिनामनी ॥
सर्वात्मा सर्वतःशक्तिः पुरुषः सर्वतोमुखः ।
सर्वज्ञः सर्वगः सर्वः सर्वमावृत्य तिष्ठति ॥५६॥
[1]मनूनामेष कूटस्थः पुरुषो द्विचतुर्मयः ।
कृत्स्नकर्माधिकारो वै देवदेवस्य वै हरेः ॥५७॥
त्रयोदशानां भूम्यादिशक्त्यन्तानां महामुने ।
विलीनस्वस्वकार्याणां [2]काम्यवर्षशतास्थितिः ॥५८॥

(कूटस्थपुरुषस्यानिरुद्धे लयः)

पुंसस्त्रीणि शतानि स्युस्ततो मनुमयः पुमान् ।
चतुर्धा [3]स्वं विभज्याथ ब्रह्मक्षत्रादिभावतः ॥५९॥
स्वे स्वे स्थानेऽनिरुद्धस्य मुखबाह्वादिके मुने ।
[4]प्रलीयते क्षणेनैव तप्तायःपिण्डवारिवत् ॥६०॥

---

1. मरुतामेष A B.
2. काम्यं वर्षशतं स्थितिम् D; काम्यं वर्षशतस्थिति A B C E F G.
3. सं A B C E F.
4. प्रलीयन्ते A B C.

लघु प्रकाशकं सत्त्वमिदमासीच्चराचरम् ।

(सत्त्वस्य काले लयः)

कालो नाम गुणो विष्णोः सुदर्शनसमीरितः ॥४५॥
सारं प्रज्ञामयं[1] सत्त्वादादत्ते ज्ञानकारणम् ।
अतिभूय तदा सत्त्वं मनवः कालसंश्रिताः ॥४६॥
काल एव जगत्कृत्स्नमिदमासीत्तदा मुने ।
आत्तसारं च तत्सत्त्वं जहाति व्यक्तिनामनी॥ ४७॥

(कालस्य नियतौ लयः)

काली कालगता शक्तिः या साऽशेषप्रकालिनी।
नियतिर्नाम तां तत्त्वं ग्रसतीश्वरचोदिता ॥४८॥
[2]सुदर्शनेरितास्ते च मनवोऽष्टौ महामुने ।
अतीत्य कालतत्त्वं तां नियतिं प्रतिपेदिरे ॥४९॥
आत्तसारस्तदा कालो जहाति व्यक्तिनामनी ।
नियतिर्नाम सा विश्वमिदमासीच्चराचरम् ॥५०॥

(नियतेः शक्तौ लयः)

महाविद्यामयी शक्तिर्नियतोर्ध्वं महामुने ।
शक्तिर्नाम तदा तां तु ग्रसतीश्वरचोदिता ॥५१॥
मनवोऽपीश्वरादिष्टा नियतिं तामतीत्य वै ।
शक्तिं मायामयीं विष्णोर्विशन्ति विपुलात्मिकाम् ॥

---

1. प्रख्यामयमिति सर्वत्र.
2. इत आरभ्य श्लोकत्रयं D पुस्तकव्यतिरिक्तेषु भ्रान्त्या त्यक्तमिति विभाति.

नियतिश्चाऽऽत्तसारा सा जहाति व्यक्तिनामनी ।
अथ शक्तिरिदं विश्वं जगदासीच्चराचरम् ॥५३॥

(शक्तेः कूटस्थपुरुषे लयः)

आचैतन्योन्मिषत्तायाः शक्तेः शक्तिः सनातनी ।
सुदर्शनेरितस्तां तु पुरुषो ग्रसति स्वयम् ॥५४॥
अतीत्य मनवः शक्तिं तं विशन्तीश्वरेरिताः ।
आत्तसारा तदा शक्तिर्जहाति व्यक्तिनामनी ॥
सर्वात्मा सर्वतःशक्तिः पुरुषः सर्वतोमुखः ।
सर्वज्ञः सर्वगः सर्वः सर्वमावृत्य तिष्ठति ॥५६॥
[1]मनूनामेष कूटस्थः पुरुषो द्विचतुर्मयः ।
कृत्स्नकर्माधिकारो वै देवदेवस्य वै हरेः ॥५७॥
त्रयोदशानां भूम्यादिशक्त्यन्तानां महामुने ।
विलीनस्वस्वकार्याणां [2]काम्यवर्षशतस्थितिः ॥५८॥

(कूटस्थपुरुषस्यानिरुद्धे लयः)

पुंसस्त्रीणि शतानि स्युस्ततो मनुमयः पुमान् ।
चतुर्धा [3]स्वं विभज्याथ ब्रह्मक्षत्रादिभावतः ॥५९॥
स्वे स्वे स्थानेऽनिरुद्धस्य मुखबाह्वादिके मुने ।
[4]प्रलीयते क्षणेनैव तप्तायःपिण्डवारिवत् ॥६०॥

---

1. मरुतामेष A B.
2. काम्यं वर्षशतं स्थितिम् D; काम्यं वर्षशतस्थिति A B C E F G.
3. सं A B C E F.
4. प्रलीयन्ते A B C.

ततोऽसौ भगवानेकः प्रलीनचिदचिन्मयः ।
शतानि दश षट्चाथं[1] वर्षाणामवतिष्ठते ॥६१॥

(अनिरुद्धस्य प्रद्युम्नेऽप्ययः)

अवस्थाय ततोऽप्येति प्रद्युम्नमजरं विभुम् ।
निरुध्य सर्वचेष्टाः स्वास्तावत्कालं स तिष्ठति ॥६२॥

(प्रद्युम्नस्य संकर्षणेऽप्ययः)

ततः प्रद्युम्नसंज्ञोऽसौ भगवान्पुष्करेक्षणः ।
अप्येति भगवन्तं तं संकर्षणमनामयम् ॥६३॥
कालं तिष्ठति तावन्तं सर्वदेवमयोऽच्युतः ।
चिदचित्खचितं विश्वं शुद्धाशुद्धमशेषतः ॥६४॥
तिलकालकवत्स्वस्य[2] देहे ज्ञानमये दधत् ।
उदयास्ताचलावेष देवः संकर्षणो बलः ॥६५॥
चिदिन्दोरचिदङ्कस्य कलास्ता अनुधावतः ।
अहीनमहरेतद्धि संकर्षणमयं परम् ॥६६॥
यत्र नानाविधा भावा व्यज्यन्ते स्वस्वयाऽऽख्यया[3] ।

(संकर्षणस्य वासुदेवेऽप्ययः)

शतानि षोडश स्थित्वा वर्षाणामयमच्युतः ॥६७॥
अप्येति भगवन्तं तं वासुदेवं सनातनम् ।
नासदासीत्तदानीं हि नो सदासीत्तदा मुने ॥६८॥

---

1. षट्चायं B C D.
2. स्वास्तिम् D.
3. ते स्वयाख्यया D.

भावाभावौ विलोप्यान्तर्विचित्रविभवोद्यौ[1] ।
अनिर्देश्यं परं ब्रह्म वासुदेवोऽवतिष्ठते ॥६९॥
सा रात्रिस्तत्परं ब्रह्म तदव्यक्तमुदाहृतम् ।
षण्णां युगानि विज्ञानबलादीनामशेषतः ॥७०॥
त्रीणि यस्मिन्प्रलीयन्ते यत्तत्सा[2] रात्रिरुच्यते ।
संकर्षणादिभूम्यन्तमञ्जनं विगतं यतः ॥७१॥
तदव्यक्तमिति ज्ञेयं समत्वात्सम उच्यते ।
या सा भगवतः शक्तिरहंता सर्वभावगा ॥७२॥
अपृथक्चारिणी सत्ता महानन्दमयी परा ।
संकर्षणादिभूम्यन्तस्तस्याः कोट्यंश ईरितः ॥७३॥
सदसच्चिदचिद्रूपैर्यत्र[3] विश्वं प्रकाशते ।
तस्मिन्नुपरते शश्वद्विश्वकोलाहलोद्गमे ॥७४॥
अलक्ष्या[4] कार्यतः शक्तिर्देवाद्विजहती भिदाम् ।
प्रतिसंचरिकां शक्तिं क्रियां सौदर्शनीं स्वकाम्[5] ॥
संहृत्य बिभ्रती तां तु स्थितिं[6] संकल्परूपिणीम् ।
इन्धनाभावतो ज्वाला वह्निभावं[7] यथा गता ॥७५॥

---

1. विलाप्यातः D.
2. यतस्सा A B C E F.
3. ०रूपे यत्र E.
4. अलक्ष्यकार्यतः D व्यतिरिक्तेषु.
5. स्विकाम् D.
6. स्थितिसंकल्परूपिणी D.
7. स्वस्य भावम् B C E F.

ब्रह्मभावं व्रजत्येवं सा[1] शक्तिर्वैष्णवी परा ।
नारायणः परं ब्रह्म शक्तिर्नारायणी च सा ॥७७॥
[2]व्याप· .गवतिसंश्लेषादेकं तत्त्वमिव स्थितौ ।
[3]संकर्षणोदयो यावद[4]हः पौरुषमिष्यते ।
तावती पौरुषी रात्रिः संहृताखिलवस्तुका ॥७८॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां प्रतिसंचरवर्णनं नाम चतुर्थोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः २७०)

---

1. ख D.
2. व्यापिका पंतिसंश्लेषादेकम् D.
3. संकर्षणादयो A B C F.
4. यावदहम् इति सर्वत्र.

ओम् ।

## अथ शुद्धसृष्टिवर्णनं नाम पञ्चमोऽध्यायः ।

(सृष्टिवर्णनप्रतिज्ञा)

अहिर्बुध्न्यः ।

कार्यकारणवर्गस्य प्रलयोऽयं प्रदर्शितः ।
सुदर्शनमयीं सृष्टिं तस्य वक्ष्यामि[1] ते मुने ॥१॥

(प्रलयावस्थब्रह्मस्वरूपानुवादः)

प्रसुप्ताखिलकार्यं यत्सर्वतः समतां गतम् ।
नारायणः[2] परं ब्रह्म सर्वावासमनाहतम्[3] ॥२॥
पूर्णस्तिमितषाड्गुण्यमसमीराम्बरोपमम् ।

(शक्तिरूपाया लक्ष्म्याः क्वचिदुन्मेषः)

तस्य स्तैमित्यरूपा या शक्तिः शून्यत्वरूपिणी ॥३॥
स्वातन्त्र्यादेव कस्माच्चित्क्वचित्सोन्मेषमृच्छति ।
आत्मभूता हि या शक्तिः परस्य ब्रह्मणो हरेः ॥४॥

---

1. वक्ष्याम्यहं मुने B C E F.
2. नारायणमयं ब्रह्म D.
3. अनागतम् D.

देवी विद्युदिव व्योम्नि क्वचिदुद्योतते तु सा ।
शक्तिर्विद्योतमाना सा शक्तिरित्युच्यतेऽम्बरे ॥५॥

(शक्तेर्विविधभावव्यञ्जकत्वम्)

व्य नक्ति विविधान्भावान् शुद्धाशुद्धान् [1] समूर्तिकान् ।
तस्या उन्मेषमृच्छन्त्याः स्वातन्त्र्यं यत्स्वनिर्मितम् ॥६॥
प्रेक्षणात्मा सुसंकल्पस्तत्सुदर्शनमुच्यते ।
सा क्रिया तद्धरेर्वीर्यं तत्तेजश्च बलं च तत् ॥७॥
[2] व्यज्यते ये च ते भावाः स्वभित्तिपरिवर्तिताः ।
सा भूतिर्विष्णुशक्तिः सा शक्तेः कोट्यंशकल्पिता ॥८॥
बहुभिर्द्वन्द्वभावैः सा शक्तिर्भू[3]तमयी स्थिता ।
शुद्धाशुद्धविभागेन चेत्यचेतनरूपतः ॥९॥
[4] काल्यका व्विभेदेन व्यक्ताव्यक्तविभागतः ।
व्यङ्ग्यव्यञ्जनरू[5]पेण वाच्यवाचकभेदतः ॥१०॥
भोग्यभोक्तृविभेदेन देहदेहिविभेदतः ।
अन्यैश्चैवंप्रकारैः सा द्वन्द्वभेदैर्विभज्यते ॥११॥
एवं प्रकारभेदे[6]न या शक्तिर्हेतुतां गता ।
तां विजानीहि देवर्षे दिव्यां सौदर्शनीं कलाम् ॥१२॥

---

1. स्वभक्तिगान् D ; स्वमूर्तिकान् E ; स्वमूर्तिगान् F.
2. व्यज्यंते D.
3. भूलमयैः A B C E F.
4. कालाकाल्य A B C.
5. व्यङ्ग्यव्यञ्जनभावेन A B C E F.
6. भेदस्य A B C E F.

समीर्यते यथा वह्निर्मेघो वापि समीरणात् ।
तथा सुदर्शनेनैव विभूतिः प्रेर्यते कला ॥१३॥
आनुलोम्येन सर्गे तु प्रातिलोम्येन संहृतौ ।
यथा संप्रेर्यमाणा सा सुदर्शननभस्वता ॥१४॥
दधाति विविधान्भावांस्[1]तथा मे [2]गदतः शृणु ।

(शुद्धसृष्टिप्रपञ्चनम्)

तत्र शुद्धमयं सर्गं विभूतेः प्रथमं शृणु ॥१५॥
यत्तत्षाड्गुण्यमित्युक्तं ज्ञानैश्वर्यबलादिकम् ।
युगैस्तस्य त्रिभिः शुद्धा सृष्टि[3]र्भूतेः प्रवर्तते ॥१६॥

(गुणयुग्मत्रयाद्व्यूहत्रयाऽऽविर्भावः)

तत्र ज्ञानबलद्वन्द्वाद्रूपं सांकर्षणं हरेः ।
ऐश्वर्यवीर्यसंभेदाद्रूपं प्राद्युम्नमुच्यते ॥१७॥
शक्तितेजःसमुत्कर्षादानिरुद्धी तनुर्हरेः ।
एते ते शक्तिमया व्यूहा गुणोन्मेष[4]स्वलक्षणाः ॥१८॥

(व्यूहत्रयेऽपि षाड्गुण्यानुवृत्तिः)

षाड्गुण्यविग्रहा देवाः पुरुषाः पुष्करेक्षणाः ।
तत्र तत्रावशिष्टं यद्गुणानां द्वियुगं मुने ॥१९॥
अनुवृत्तिं भजत्येव तत्र तत्र [5]यथायथम् ।

---

1. तदा E F. 2. वदतः A B C E F.
3. सृष्टिभूते A B C F; सृष्टिभूतैः E.
4. सलक्षणः A B C E F.
5. यथातथम् E; यथातथा F.

6

(त्रिधा चातुरात्म्यस्थितिः)

व्याप्तिमात्रं गुणोन्मेषो मूर्तीकार[1] इति त्रिधा[2] ॥
चातुरात्म्यस्थितिर्विष्णोर्गुणव्यतिकरोद्भवा ।

(संकर्षणस्य कृत्यम्)

तत्र ज्ञानमयत्वेन देवः संकर्षणो बली[3] ॥२१॥
व्यनक्त्यैकान्तिकं मार्गं भगवत्प्राप्तिसाधनम् ।

(प्रद्युम्नस्य कृत्यम्)

वीर्यैश्वर्यमयो देवः प्रद्युम्नः पुरुषोत्तमः[4] ॥२२॥
स्थितः शास्त्रार्थभावेन भगवत्प्राप्तिवर्त्मना ।

(अनिरुद्धस्य कृत्यम्)

शास्त्रार्थस्य फलं यत्तद्भगवत्प्राप्तिलक्षणम् ॥२३॥
प्रापयत्यनिरुद्धः[5] सन् साधकान्पुरुषोत्तमः ।
शास्त्रशास्त्रार्थतत्साध्यफलनिर्वाहका इमे ॥२४॥
पुरुषाः पुण्डरीकाक्षा व्यूहाः शक्तिमया हरेः ।

(परवासुदेवेन सह व्यूहस्य चातुरात्म्यम्)

भगवान्वासुदेवश्च व्यूहाश्चैते त्रयो मुने ॥२५॥
चातुरात्म्यमिदं विद्धि व्यक्ताव्यक्तस्वलक्षणम् ।

---

1. मूर्तिकार इति सर्वत्र पाठः.
2. त्रिधा E F; क्रिया A B C D.
3. बलः D.
4. पुष्करेक्षणः D.
5. ॰द्धस्तत् A B C E F.

(गुणोन्मेषस्वरूपप्रदर्शनम्)

गुणाः शक्तिमया ये[1] ते ज्ञानैश्वर्यबलादयः ॥२८॥
तेषां युगपदुन्मेषः स्तैमित्यविरहात्मकः ।
संकल्पकल्पितो विष्णोर्यः[2] स तद्व्यक्तिलक्षणः ॥
भगवान्वासुदेवः स परमा प्रकृतिश्च सा ।
शक्तिर्या [3]व्यापिनो विष्णोः सा जगत्प्रकृतिः परा ॥
शक्तेः शक्तिमतो भेदा[4]द्वासुदेव इतीर्यते ।

(सिसृक्षोर्वासुदेवात्संकर्षणाऽऽविर्भावः)

सर्वशक्तिमयो देवो वासुदेवः सिसृक्षया ॥२९॥
विभजत्यात्मनाऽऽत्मानं यः स संकर्षणः स्मृतः ।

(तत्र दृष्टान्तः)

भानावुदयशैलस्थे प्रभा यद्वद्विजृम्भते ॥३०॥
उदयस्थे तथा[5] देवे प्रभा संकर्षणात्मिका ।

(तस्य षोडशशतवर्षप्रतीक्षणम्)

अ[6]व्यापृता शतान्येषा शक्तिस्तिष्ठति षोडश ॥३१॥
संकर्षणात्मिका साक्षाद्विज्ञानबलवा[7]रिधिः ।
अनन्तो भगवान्विष्णुः शक्तिमान्पुरुषोत्तमः ॥३२॥

---

1. एते B C.
2. या स्थितिर्व्यक्तिलक्षणा A B C E F.
3. व्यापिनी A B C E F.
4. देवाद् A B C E F.
5. तदा A B C E F.
6. अव्यावृता D.
7. वारिधेः B C.

पूर्णस्तिमितषाड्गुण्यो निस्तरङ्गार्णवोपमः ।
षण्णां युगपदुन्मेषाद्गुणानां स्वप्रचोदितात् ॥३३॥
अनन्त एव भगवान्वासुदेवः सनातनः ।
तत्र ज्ञानबलोन्मेषात्स्वसंकल्पप्रचोदितात् ॥३४॥
अनन्त एव भगवान्देवः संकर्षणोऽच्युतः ।

(प्रद्युम्नाऽऽविर्भावः)

स्थित्वा षोडश वर्षाणि देवः शक्तिमयोऽच्युतः ॥३५॥
अनन्त एव भगवान्प्रद्युम्नः पुरुषोत्तमः ।[1]
अंशांशेनोदिता शक्तिः प्राद्युम्नी भगवत्प्रभा ॥३६॥
अव्यापृता शतान्येषा तूष्णीं तिष्ठति षोडश ।

(अनिरुद्धाऽऽविर्भावः)

ततः शक्तिमयो देवः प्रद्युम्नः पुरुषोत्तमः ॥३७॥
शतानि षोडश स्थित्वा स्वसंकल्पप्रचोदितः ।
अनन्त एव भगवाननिरुद्धो भवत्युत ॥३८॥
अंशांशेनोदिता शक्तिरानिरुद्धी हरेः प्रभा ।
अव्यापृता शतान्येषा[2] तूष्णीं तिष्ठति षोडश ॥३९॥

(व्यूहस्य षोडशशतवर्षानन्तरं सृष्टौ व्यापृतिः)

शतानि षोडश स्थित्वाऽनिरुद्धः शक्तिमानसौ ।
तदा व्याप्रियते सृष्टौ पूर्वाभ्यां[3] सह नारद ॥४०॥

---

1. इदमर्धं A पुस्तके न दृश्यते.
2. शक्तिः A B C E F.
3. व्यूहाभ्यां A B C E F.

व्यूहा[1] एते विशालाक्षाश्चत्वारः पुरुषोत्तमाः ।

(व्यूहानां हेयप्रतिभटत्वमनादित्वं च)

निर्दोषा निरनिष्टाश्च निरवद्याः सनातनाः ॥४१॥

अनन्तमक्षरं चैतच्चा[2]तुरात्म्यं महामुने ।

निस्तरङ्गदशायां ते निःसक्ताः सक्तचिन्मयाः ॥४२॥

शक्त्यात्मका गुणोन्मेषदशायां ते व्यवस्थिताः ।

तत्र स्थूलदशायां ते व्यक्तिभावमुपागताः[3] ॥४३॥

जगतामुपकाराय सच्चिदानन्दलक्षणाः ।

(चातुरात्म्यस्य मनआलम्बनार्थत्वम्)

मनआलम्बना[4]यैषा चातुरात्म्यव्यवस्थितिः ॥४४॥

(व्यूहाद्व्यूहान्तराऽऽविर्भावः)

आम्नासिषुरमुष्याश्च रहस्याऽऽम्नायवेदिनः ।

व्यूहान्तरविभावादीन्भेदान् संकल्पकल्पितान् ॥

(द्वादश व्यूहान्तराणि)

व्यूहान्तरं दश द्वे च केशवाद्याः प्रकीर्तिताः ।

(वासुदेवात्केशवादित्रयम्)

केशवादित्रयं तत्र वासुदेवाद्विभाव्यते ॥४६॥

---

1. व्यूहानां ते A B C.
2. चैव A B C E F.
3. ततः स्थूलदशायां ते मूर्तिभावमुपागताः D.
4. आलम्बना एषा B C E F.

(संकर्षणाद्गोविन्दादित्रयम्)

संकर्षणाच्च गोविन्दपूर्वं त्रितयमद्भुतम् ।

(प्रद्युम्नात् त्रिविक्रमादित्रयम्)

त्रिविक्रमाद्यं त्रितयं प्रद्युम्नादुदितं मुने ॥४७॥

(अनिरुद्धात् हृषीकेशादित्रयम्)

हृषीकेशादिकं तद्वदनिरुद्धान्महामुने ।

(व्यूहान्तरस्य त्रैविध्यम्)

पराः स्वकारणान्तस्थाः सूक्ष्मास्ते द्विभुजाः स्मृताः ॥
चतुर्भुजाः ते विज्ञेयाः स्थूलास्त्रिभुवनेश्वराः ।
चक्राद्यायुधविन्यासो यत्रतत्रेऽभिधास्यते ॥४९॥

(विभवा एकोनचत्वारिंशत्)

विभवाः पद्मनाभाद्यास्त्रिंशच्च नव चैव हि ।
पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः ॥५०॥
विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः ।
[1]क्रोडात्मा बडबावक्त्रो धर्मो वागीश्वरस्तथा ॥५१॥
एकाम्भोनिधिशायी च भगवान्कमठेश्वरः ।
वराहो नारसिंहश्च पीयूष[2]हरणस्तथा ॥५२॥
श्रीपतिर्भगवान्देवः कान्तात्माऽमृतधारकः ।

---

1. क्रोधात्मा D.
2. पीयूषा॰ E F.

राहुजित्कालनेमिघ्नः पारिजातहरस्तथा ॥५३॥
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोधशायी भगवानेकशृङ्गतनुस्तथा ॥५४॥
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥५५॥
ज्वलत्परशुधृग्रामो [1]रामश्चान्यो धनुर्धरः ।
वेदविद्भगवान्कल्की पातालशयनः [2]स्मृतः ॥५६॥
त्रिंशच्च नव चैवैते पद्मनाभाद्यो मताः ।

(तेषामुत्पत्त्यादिकं सात्त्वतादौ ज्ञेयम्)

यतश्चैषां समुत्पत्तिर्यो व्यापारो यदायुधम् ॥५७॥
या मूर्तिर्यादृशी चैव यत्र चैते व्यवस्थिताः ।
भूषणानि विचित्राणि वासांसि विविधानि च ॥ ॥
बाह्यान्तःकरणानां च त्रयो वर्गाः सवृत्तयः ।
संकल्पनिर्मिता शक्तिर्या तत्तत्कार्यगोचरा[3] ।
सात्वते शासने सर्वं यत्तदुक्तं महा[4]मुने ॥५९॥

---

1. रामश्चान्यश्चतुर्गतिः D E F G.
2. प्रभुः D E F.
3. या सा तत्कार्यगोचरा A B C D E F.
4. महामते E F.

(अध्यायार्थोपसंहारः)

इतीयं [1]शुद्धसृष्टिस्ते विष्णोः संकल्पकल्पिता ।
भूत्यंशो लेशतः प्रोक्तः शृणु सृष्टिमशेषतः ॥६०॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

शुद्धसृष्टिवर्णनं नाम पञ्चमोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३३०)

---

1. शुद्धसंसृष्टिर्विष्णोः A B C E F.

ओम् ।

## अथ शुद्धेतरसृष्टिवर्णनं नाम षष्ठोऽध्यायः ।

(तत्र शक्तितद्वतोर्भेदवदभेदस्याप्युपपत्तिः)

अहिर्बुध्न्यः ।

योऽसौ नारायणो देवः परमात्मा सनातनः ।
अहंभावात्मिका शक्तिस्तस्य तद्धर्मधर्मिणी ॥ १ ॥
ताविमावेकधैवोक्तौ भेद्यभेदकभावतः ।
पृथक्त्वेन च शास्त्रेषु जगद्धेतुतयोदितौ ॥ २ ॥

(शक्तितद्वतोरपृथक्स्थितिः)

नैव शक्त्या विना कश्चिच्छक्तिमानस्ति कारणम् ।
न च शक्तिमता शक्तिर्विनैकाऽप्यवतिष्ठते ॥ ३ ॥

(भगवतो लक्ष्म्याश्च प्रत्येकं जगत्कारणत्वव्यवहारबीजकथनम्)

तत्तद्गौरवमाश्रित्य ऽ वेदान्तपारगैः ।
जगद्धेतुतया देवावेकैकाविव दर्शितौ ॥ ४ ॥

(शुद्धेतरसृष्टिकथनप्रतिज्ञा)

इति व्यवस्थिते सृष्टिमुक्तशिष्टामिमां शृणु ।

(भूतिशक्तेः स्वसंकल्परूपक्रियाशक्तिप्रवर्त्यत्वम्)

येयं भूतिमयी[1] स्फूर्तिर्विष्णुशक्तेः पुरोदिता ॥५॥
तस्याः संकल्पमय्यैव स्फूर्त्या सा बहु नर्त्यते[2] ।

(योगालम्बनभूतव्यूहविभवादेः शुद्धिमयस्फूर्तिरूपत्वम्)

भूतेः शुद्धिमयी स्फूर्तिः सा व्यूहविभवात्मिका[3]॥६॥
यामालम्ब्य तरन्तीमं योगिनो भवसागरम् ।

(शुद्धेतरसृष्टेः व्यूहविभवमूलकत्वम्)

अथ शुद्धेतरा सृष्टिस्तन्मूलैव प्रवर्तते ॥७॥

(तस्यास्त्रैविध्यम्)

पुरुषश्चैव कालश्च गुणश्चेति त्रिधोच्यते ।
भूतिः शुद्धेतरा विष्णोः पुरुषो द्विचतुर्मयः[4] ॥८॥
स[5] मनूनां समाहारो ब्रह्मक्षत्रादिभेदिनाम् ।

(प्रद्युम्नान्मिथुनचतुष्टयोत्पत्तिः)

ब्राह्मणो ब्राह्मणी चैव मिथुनं तन्मनुद्वयम् ॥९॥
प्रद्युम्नस्य मुखाज्जातं स्वसंकल्पेन चोदितम् ।
उरसः क्षत्रियद्वन्द्वमूरुतश्च विशो द्वयम् ॥१०॥
पद्भ्यां शूद्रद्वयं चैव प्रद्युम्नस्य समुद्गतम् ।
समष्टिर्या मनूनां सा पुरुषो द्विचतुर्मयः[6] ॥११॥

---

1. भूतमयी A B C.
2. मन्यते A B C E F.
3. विभवादिका D.
4. द्विचतुर्युगः A B C.
5. स मन्यूनां A B C D E.
6. द्विचतुर्युगः A B C.

(कालप्रकृतिसृष्टिः)

सूक्ष्मकालगुणावस्था[1] सुदर्शनसमीरिता ।
प्रद्युम्नस्य ललाटाच्च भ्रुवोः कर्णादुदीरिता ॥ १२ ॥

(अनिरुद्धाय पालनाज्ञादानम्)

पुरुषः शक्तिरित्येतच्चेतनाचेतनात्मकम् ।
[2]वर्धयेत्यनिरुद्धाय प्रद्युम्नेनोपपाद्यते ॥ १३ ॥

(तेन तद्वर्धनम्)

अन्तःस्थपुरुषां[3] शक्तिं तामादाय स्वमूर्तिगाम्[4] ।
संवर्धयति योगेन ह्यनिरुद्धः स्वतेजसा ॥ १४ ॥

(नियतिकालयोरुदयः)

नियतिः काल इत्येवं शक्तिः संकल्पचोदिता ।
द्विधोदेत्यनिरुद्धात्सा यत्तत्कालमयं वपुः ॥ १५ ॥

(गुणमय्याः प्रकृतेस्त्रैविध्यम्)

यत्तद्गुणमयं रूपं शक्तेस्तस्याः प्रकीर्तितम् ।
सत्त्वं रजस्तम इति त्रिधोदेति क्रमेण तत् ॥ १६ ॥

---

1. सूक्ष्मा A D E F.
2. वर्धयत्यनि° A B C.
3. पुरुषाः शक्तिं D.
4. स्वमूर्तिकाम् B C ; समूर्तिकाम् D.

(सत्त्वादिभ्यो रजआद्युत्पत्तिः)

सत्त्वाद्रजस्तमस्तस्मात्तमसो बुद्धिरुद्गता ।
बुद्धेरहंकृतिस्त[1]स्या भूततन्मात्रपञ्चकम् ॥१७॥
एकादशकमक्षाणां मात्रेभ्यो भूतपञ्चकम् ।
भूतेभ्यो भौतिकं सर्वमित्ययं सृष्टिसंग्रहः ॥१८॥

(पुनर्विस्तरेण सृष्टिप्रपञ्चनप्रश्नः)

श्रीनारदः ।

भगवन्भगनेत्रघ्न तत्त्वविज्ञानवारिधे ।
आख्याहि वि[2]स्तरेणाद्य भूतेरुन्मेषमद्भुतम् ॥१९॥

(तत्प्रपञ्चनम्)

अहिर्बुध्न्यः ।

शृणु नारद तत्त्वेन विष्णोः संकल्पकारिताम् ।
भूतेः परिणतिं चित्रां चिदचिद्वर्गसंकुलाम् ॥२०॥

(तत्र परवासुदेवस्य नित्यविभूतिमत्ताप्रतिपादनम्)

शुद्धा पूर्वोदिता सृष्टिर्या सा व्यूहा[3]दिभेदिनी ।
सुदर्शनाख्यात्संकल्पात्तस्या एव प्रभोज्ज्वला ॥२१॥
ज्ञानानन्दमयी स्त्या[4]ना देशभावं व्रजत्युत ।
स देशः परमं व्योम निर्मलं पुरुषात्परम् ॥२२॥

---

1. तस्येति सर्वत्र पाठः.
2. विस्तरेणेमं D.
3. व्यूहाविभेदिनी A B C.
4. 'सत्या' इत्यपि पाठान्तरं सर्वत्र.

निःसीमसुखसन्तानमनवद्यमनाकुलम् ।
तत्रानन्दमया भोगा लोका[1]श्चानन्दलक्षणाः ॥२३॥
ज्ञानानन्दमया देहा मुक्तानां भावितात्मनाम् ।

(श्रियःपतेर्भगवतो नित्यमुक्तानुभाव्यत्वम्)

सदा पश्यन्ति ते[2] देवाः पुरुषं पुष्करेक्षणम् ॥२४॥
षाड्गुण्यविग्रहं देवं तादृश्या च श्रिया युतम् ।
संकल्पसाधिताशेषदेहदैहिकविस्तरम् ॥२५॥
ईशानमस्य स[3]र्वस्य जगतस्तस्थुषस्पतिम् ।
सर्वावासमनावासं नारायणमनामयम् ॥२६॥

(मुक्तानां स्वरूपम्)

तत्पदं प्राप्य त[4]त्त्वज्ञा मुच्यन्ते वीतकल्मषाः ।
त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः ॥२७॥
आविर्भावतिरोभावधर्मभेदविवर्जिताः ।

(तेषामपुनरावृत्तिः)

परमं तेऽध्वनः पारं वैष्णवं पदमाश्रिताः ॥२८॥
विशन्ति नेममध्वानं कालकल्लोलसंकुलम् ।

(तेषां यथोपासनं फलप्राप्तिः)

भक्तास्ते यादृशे रूपे संसारपदमाश्रिताः ॥२९॥

---

1. लोका आनंद A B C E F.
2. तं A B C.
3. देवस्य D; जगतः A B C.
4. सर्वज्ञाः A B C E F.

तादृशं ते समीक्षन्ते परमव्योमवासिनः ।
विहृत्य सुचिरं कालं कोट्योघ[1]प्रतिसंचरम् ॥३०॥
ततो विशन्ति ते दिव्यं[2] षाड्गुण्यं वैष्णवं यशः ।

(परमव्योम्नोऽशक्यवर्णनत्वम्)

तदेतत्परमव्योम लेशतस्ते प्रदर्शितम् ॥३१॥
नैव वर्षायुतेनापि वक्तुं शक्योऽस्य विस्तरः ।

(जीवसमष्टिपुरुषस्यार्वाचीनस्थानवर्तित्वम्)

उक्तः कर्माधिकारो यः पुरुषस्ते चतुर्युगः ॥३२॥
अस्मात्स परमव्योम्नस्तिष्ठत्यर्वाचि[3] वै पदे ।
सर्वात्मनां समष्टिर्या कोशो मधुकृतामिव ॥३३॥
शुद्ध्यशुद्धिमयो भावो भूतेः स पुरुषः स्मृतः ।
अनादिवासनारेणुकुण्ठितैरात्मभिश्चितः ॥३४॥

(स्वतः शुद्धानामप्यात्मनां भगवच्छक्त्या स्वरूपतिरोधानम्)

[4]आत्मनो भूतिभेदास्ते सर्वज्ञाः सर्वतोमुखाः ।
भगवच्छक्तिमय्यैवं मन्दतीव्रादिभावया ॥३५॥
तत्तत्सुदर्शनोन्मेषनिमेषानुकृतात्मना ।
सर्वतोऽविद्यया विद्धाः क्लेशमय्या वशीकृताः[5] ॥३६॥

---

1. कोट्या संप्रातिसंचरम् A B C E F.
2. दैव्यम् D.
3. अर्वाचिके A B C E F.
4. आत्मानो D E F.
5. सर्वतोऽविद्यया सिद्धाः क्लेशाशयवशीकृताः D.

(तिरोहितस्वरूपाणां चातूरूप्यम्)

ब्रह्मक्षत्रादिभावेन चातूरूप्यं व्रजन्ति ते ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इति विभेदतः ॥
आत्मानो जीवसंज्ञास्ते बन्धमोक्षौ व्रजन्ति[1] ते ।

(तेषां कर्मपारवश्यात्पृथिव्यामवतरणम्)

मनवो[2] नाम कूटस्थास्तेषामुक्ताः समष्टयः ॥३८॥
क्लेशाशयापरामृष्टाः सर्वज्ञाः[3] सर्वतोमुखाः ।
नित्यसिद्धा हि[4] भूत्यंशास्ते प्रोक्ता भगवन्मयाः ॥
आविर्भावतिरोभावैः स्वस्मिन्नात्मनि नारद ।
आत्मनो वर्तयन्तस्ते वैष्णवा आधिकारिकाः ॥४०॥
विष्णोः संकल्परूपेण स्थित्वाऽस्मिन् पौरुषे पदे ।
योगेनावतरन्त्यंशैः स्थानात्स्थानं धरावधि ॥४१॥

(अवतीर्णानां प्रजास्रष्टृत्वम्)

सृष्टायां कर्मभूमौ ते मिथुनीभूय मानवान् ।
चतुःशतं सृजन्त्येते भूयो मानवमानवान् ॥४२॥
ते चापरिमिताः सर्वे विस्तारस्तत्र[5] वक्ष्यते ।

---

1. भजन्ति D.
2. मान इति सर्वत्र.
3. सुसंज्ञाः A B C E F.
4. विभूत्यंशास्ते D.
5. तस्य A B C E F.

(अनिरुद्धाच्छक्त्युत्पत्तिः)

अर्वाचीने पदे तस्मात्पुरुषाद्धि[1] चतुर्युगात् ॥४३॥
स्रष्टाऽनिरुद्धतः[2] शक्तिस्तत्सुदर्शनचोदितात् ।

(शक्तौ कूटस्थमनूनामवतरणम् )

स्रष्टायामथ शक्तौ तु मनवोऽष्टौ महामुने ॥४४॥
अवतीर्य स्वकात्स्थानाद्विष्णुसंकल्पचोदिताः ।
तिष्ठन्ति कललीभूतास्[3]तस्मिञ्शक्तिमये पदे ॥४५॥
कालो नाम गुणो नाम तस्या गर्भस्थितं द्वयम् ।

(शक्तितो नियतेरुत्पत्तिः)

कालस्य नियतिर्नाम सूक्ष्मः सर्वनियामकः ॥४६॥
उदेति प्रथमं शक्तेर्विष्णुसंकल्पचोदितः ।

(तत्र मनूनां स्थितिः)

मनवोऽवतरन्त्यत्र ते सुदर्शनचोदिताः ॥४७॥
यस्य स्याद्यादृशं रूपं यत्करं यत्स्वभावकम् ।
सुदर्शनभावस्थं तत्तन्नि[4]यमभावितम् ॥४८॥

(नियतितः कालस्योत्पात्तिः)

कालस्य पावनं[5] रूपं यत्तु तत्कलनात्मकम् ।

---

1. पुरुषोऽधि चतुर्युगः A B C.
2. स्रष्टोऽनिरुद्धतो देवास्तत्सु° A B C.
3. सकलीभूताः D.
4. तत्तन्नियति D.
5. वाचनं D; पाचनं E F.

उदेति नियतेः सोऽथ कालः संकल्पचोदितः ॥४९॥

(तत्र मनूनां स्थितिः)

नियतेर्मनवोऽप्यत्र काले[1] ह्यवतरन्ति ते ।
कालः स कलयत्येको[2] विष्णुसंकल्पचोदितः ॥५०॥
कलयत्यखिलं[3] काल्यं[4] नदीकूलं यथा रयः ।

(कालात्क्रमेण गुणमयरूपोत्पत्तिः)

यत्तद्गुणमयं रूपं शक्तेः पूर्वं समीरितम् ॥५१॥
सोपानक्रमतः कालात्तद्गौणं व्यज्यते[5] वपुः ।

(तत्र प्रथमं सत्त्वोत्पत्तिः)

सत्त्वं तत्र लघु स्वच्छं गुणरूपमनामयम् ॥५२॥
प्रथमं व्यज्यते कालान्मनवोऽवतरन्त्यतः ।

(आनिरुद्ध्या वैष्णवमूर्त्या तस्याधिष्ठानम् )

आनिरुद्धी ततो मूर्तिः स्वसंकल्पप्रचोदिता ॥५३॥
अधितिष्ठति तत्सत्त्वं विष्णुनाम्नैव नामभाक् ।

(तत एव तस्य सुखरूपत्वं स्वच्छत्वं च)

तदेतत्सकलं स्वच्छं सुखमासीदनाकुलम् ॥५४॥

---

1. कालेप्यव० D.
2. काल० E F.
3. काल० E F.
4. कार्यम् A B C.
5. विद्यते A B C.

अन्तःस्थमनुकं सत्त्वमन्तःस्थाच्चिद्गुणं मुने ।
विष्णुनाऽधिष्ठितं

(सत्त्वाद्रजउत्पत्तिः)

तस्माद्विष्णुसंकल्पचोदितात् ॥५५॥
रजो नाम गुणः [1]सत्त्वात्तस्मादाविर्भवत्यलम् ।

(तत्र मनूनां स्थितिः)

मनवोऽवतरन्त्यत्र सत्त्वात्संकल्पचोदिताः ॥५६॥

(तस्यानिरुद्धाधिष्ठितब्रह्मरूपत्वम्)

ब्राह्मी मूर्तिर्गुणं तं चाप्यानिरुद्धयधितिष्ठति ।

(अतस्तस्य दुःखरूपत्वम्)

तदेतत्प्रचलं दुःखं रजः शश्वत्प्रवृत्तिमत् ॥५७॥
लोलीभूतमिदं तच्च [2]विश्वमन्तःस्थितं तदा ।

(रजसस्तमउत्पत्तिः)

ब्रह्मणाऽधिष्ठितात्तस्मादन्तःस्थमनुकान्मुने ॥५८॥
संकल्पचोदितं विष्णोस्तमो नाम गुणोऽभवत् ।

(तत्र मनूनां स्थितिः)

मनवोऽवतरन्त्यत्र ते सुदर्शनचोदिताः ॥५९॥

(तस्यानिरुद्धाधिष्ठितरुद्रस्वरूपत्वम्)

रुद्रो नाम गुणस्तं चाप्यानिरुद्धयधितिष्ठति ।

---

1. सत्त्वं तास्मिन्नाविर्भवत्यलम् A B C.
2. विमलं तास्थितं तदा (?) A B C.

(अतस्तस्य मोहनादिरूपत्वम्)

गुरु विष्टम्भनं शश्वन्मोहनं चाप्रवृत्तिमत् ॥६०॥
तत्तमो नाम भणितं[1] गुणसागरपारगैः ।

(अंशतो गुणत्रयसाम्यापत्तिः)

सुदर्शनमयेनैव संकल्पेनात्र वै हरेः ॥६१॥
चोद्यमाने[2]ऽपि सृष्ट्यर्थं पूर्णं गुणयुगं तदा ।
अंशतः साम्यमायाति विष्णुसंकल्पचोदितम् ॥

(तस्यैव प्रकृतित्वम्)

त्रैगुण्यं नाम तत्त्वज्ञैस्तत्तमः परिगीयते ।

(प्रकृतिपर्यायशब्दाः)

गुणसाम्यमविद्या च स्वभावो योनिरक्षरम् ।
अयोनिर्गुणयोनिश्चेत्याद्यास्त्रैगुण्यवाचकाः ॥६३॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

शुद्धेतरसृष्टिवर्णनं नाम षष्ठोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ३९३)

---

1. गुणितम् A B C.
2. चोद्यमानोऽपि B C.

ओम् ।

## अथ शुद्धेतरसृष्टिवर्णनं नाम सप्तमोऽध्यायः ।

(तत्र प्रकृतिपुरुषकालानां समष्टिः)

अहिर्बुध्न्यः ।

[1]अन्यूनानतिरिक्तं यद्गुणसाम्यं तमोमयम् ।
तत्सांख्यैर्जगतो मूलं प्रकृतिश्चेति कथ्यते ॥ १ ॥
क्रमावतीर्णो यस्तत्र चतुर्मनुयुगः पुमान् ।
समष्टिः पुरुषो योनिः स कूटस्थ इतीर्यते ॥ २ ॥
यत्तत्कालमयं तत्त्वं जगतः संप्रकालनम् ।
स तयोः कार्यमास्थाय संयोजकविभाजकः ॥ ३ ॥

(भगवत्संकल्पचोदितात् त्रितयादस्मान्महदाद्युत्पत्तिः)

मृत्पिण्डीभूतमेतत्तु कालादित्रितयं मुने ।
विष्णोः सुदर्शनेनैव स्वस्वकार्यप्रचोदितम् ॥ ४ ॥
महदादिपृथिव्यन्ततत्त्ववर्गोपपादकम् ।

(प्रकृतिः स्वरूपतः स्वभावतश्च परिणामिनी)

पयोमृदादिवत्तत्र प्रकृतिः परिणामिनी ॥ ५ ॥

---

1. अथ न्यूनातिरिक्तम् A B C E F.

(पुरुषः स्वरूपतोऽपरिणामी)

पुमानपरिणामी सन् संनिधानेन कारणम् ।

(कालस्य प्रकृतिपुरुषपाचकत्वम् )

कालः पचति तत्त्वे द्वे प्रकृतिं पुरुषं च ह ॥६॥

(प्रकृतेर्महत्तत्त्वोत्पत्तिः)

पुरुषाधिष्ठितात्तस्माद्विष्णुसंकल्पचोदितात् ।
कालेन कलिताच्चैव गुणसाम्यान्महामुने ॥७॥
महान्नाम महत्तत्त्वमव्यक्तादुदितं मुने ।

(महत्तत्त्वपर्यायशब्दाः)

विद्या गौर्यवनी ब्राह्मी वधूर्बुद्धिर्मतिर्मधुः ॥८॥
अख्यातिरीश्वरः प्राज्ञेत्येते तद्वाचका मुने ।[2]

(महतस्त्रैविध्यम् )

कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते ॥
तमःसत्त्वरजोभेदात्तत्तदुन्मेषसंज्ञया ।
कालस्त्रुटिलवाद्यात्मा बुद्धिरध्यवसायिनी ॥१०॥
प्राणः प्रयतनाकार इत्येता महतो भिदाः ।

(तत्र सात्त्विकस्य चातुर्विध्यम् )

धर्मो ज्ञानं विरागश्चाप्यैश्वर्यमिति संज्ञया ॥११॥
महतः सात्त्विकं रूपं चतुर्धा प्रविभज्यते ।

---

1. गौर्युवती ब्रह्मा D.
2. इदमर्धं सर्वत्रैवमेव दृश्यते.

(तामसस्यापि चातुर्विध्यम्)

अधर्माज्ञाना[1]वैराग्यमनैश्वर्यं च तामसम् ॥१२॥

(महत्तत्त्वे मनूनामवस्थितिः)

विद्याया उदरेऽष्टौ ते सुदर्शनसमीरिताः ।
मनवो गर्भतां यान्ति सर्वज्ञाः सर्वदर्शिनः ॥१३॥

(तत्र बुद्ध्युत्पत्तिः)

बोधनं नाम वेद्यं तदिन्द्रियं तेषु जायते ।
येनार्थानध्यवस्येयुः सदसत्[2]प्रविभागिनः ॥१४॥

(महतोऽहंकारोत्पत्तिः)

विद्याया उदरे तत्राहंकृतिर्नाम जायते ।
संकल्पाच्चोदिता विष्णोः चोदितायाः सुदर्शनात् ॥

(अहंकारपर्यायाः)

अहंकारोऽभिमानश्च प्रजापतिरहंकृतिः ।
अभिमन्ता च बोद्धा चेत्यस्याः पर्यायवाचकाः ॥

(अहंकारस्य त्रैविध्यम्)

तस्य वैकारिकं नाम रूपं सात्त्विकमुच्यते ।
तैजसं राजसं रूपं भूतादिर्नाम तामसम् ॥१७॥

(अहंकारस्य रूपभेदाः)

कामः क्रोधश्च लोभश्च मनश्चावमतिस्तृषा ।

---

1. ज्ञानसामान्यमनै° D.
2. प्रविभागतः D.

इत्यहंकृतिरूपाणि दर्शितानि मुने तव ॥१८॥

(अहंकारे मनूनामवस्थितिः)

नानाविभवयुक्तायामुत्पन्नायामहंकृतौ ।
तदन्तर्गर्भमायाति मनूनां तच्चतुर्युगम् ॥१९॥

(अहंकारान्मनउत्पत्तिः)

सुदर्शनेरितं विष्णोराहंकारिकमिन्द्रियम् ।
मनो नाम मनूनां तज्जायते चिन्तनात्मकम् ॥२०॥
मनस्वी बुद्धिमांश्चापि गर्भो मनुमयस्तथा ।

(शब्दतन्मात्रोत्पत्तिः)

भूतादेः शब्दतन्मात्रं तामसादथ जायते ॥२१॥

(तस्मादाकाशोत्पत्तिः)

वियच्च शब्दतन्मात्राज्जायते शब्दलक्षणम् ।

(आकाशस्य गुणकर्मणी)

शब्दैकगुणमाकाशमवकाशप्रदायि च ॥२२॥

(आकाशे मनूनां स्थितिः)

तदन्तर्गर्भतां यान्ति विष्णुसंकल्पचोदिताः ।
मनवोऽष्टौ महाबुद्धे[1]

(श्रोत्रवाचोरुत्पत्तिः)

तदा वैकारिकात्पुनः ॥२३॥

---

1. महामुने D.

श्रोत्रं वागिति विज्ञानकर्मेन्द्रिययुगं मुने ।
समीक्षयैव देवस्य मनुषु प्रतिजायते ॥२४॥

(मनूनां तद्वैशिष्ट्यम्)

श्रोत्रवानथ वाग्मी च गर्भो मनुमयस्तथा ।

(अथ स्पर्शतन्मात्रोत्पत्तिः)

सुदर्शनेरिताद्विष्णोर्भूतादेः स्पर्शमात्रकम् ॥२५॥
जायते

(तस्माद्वायूत्पत्तिः)

स्पर्शवान्वायुस्तस्मादपि च जायते ।

(वायोः क्रियाभेदाः)

शोषणं प्रेरणं[1] चेष्टा व्यूहनं च समूहनम् ॥२६॥
क्रियाभेदा इमे तस्माज्जायन्ते वायुतो मुने ।

(त्वक्पाण्योरुत्पत्तिः)

वैकारिकादहंकारात्त्वक्पाणिद्वितयं मुने ॥२७॥
ज्ञानकर्मेन्द्रियद्वन्द्वं संकल्पात्तस्य जायते ।

(वायौ मनूनां स्थितिः)

तदन्तर्गर्भतां याति तदा मनुमयः पुमान् ॥२८॥

(तेषां त्वक्पाणिवैशिष्ट्यम्)

चेष्टमानस्तदा गर्भो विष्णुसंकल्पचोदितः ।
त्वक्पाणिद्वयवानासीत्[2]स्पर्शादानादिसिद्धये ॥२९॥

---

1. पोषणम् A B C E F.
2. स्पर्शदानादि A B C D.

(अथ रूपतन्मात्रोत्पत्तिः)

तामसादथ भूतादेः सुदर्शनसमीरितात् ।
जायते रूपमात्रं तु

(तस्मात्तेजस उत्पत्तिः)

ज्योतिस्तस्माच्च रूपवत् ॥३०॥

(तेजसः क्रियाभेदाः)

रूपं व्यक्तिस्तथा पाकः कान्तिर्दीप्तिरितीदृशाः ।
जायन्ते तैजसा भेदाः

(चक्षुःपादयोरुत्पत्तिः)

भेदाद्वैकारिकात्तथा ॥३१॥
सुदर्शनेरिताज्जातं चक्षुःपादयुगं मुने ।

(तेजसि मनूनां स्थितिः)

तदन्तर्गर्भतां यान्ति ते सुदर्शनचोदिताः ॥३२॥
मनवः

(तेषां चक्षुःपादवैशिष्ट्यम्)

रूपवन्तस्ते कान्तिदीप्त्यादिशालिनः ।
चक्षुष्मन्तः पादवन्तो वीक्षणाटनयोगिनः[1] ॥३३॥

(अथ रसतन्मात्रोत्पत्तिः)

तामसादथ भूतादेर्विष्णोरीक्षानियोजितात् ।

---

1. वीक्षणायन° E.

जायते रसमात्रं तु

(तस्मादपामुत्पत्तिः)

जायन्तेऽम्भांसि वै ततः ॥३४॥

(तत्क्रियाभेदाः)

जायन्तेऽथ गुणास्तेषां रसस्नेहद्रवादयः ।

(रसनोपस्थेन्द्रियोत्पत्तिः)

अथ वैकारिकात्तस्माद्विष्णुसंकल्पचोदितात् ॥३५॥
रसनोपस्थमित्येतज्जायते[1] द्विक्रियात्मकम् ।

(अप्सु मनूनां स्थितिः)

तदन्तर्गर्भतां यान्ति विष्णुसंकल्पचोदिताः ॥
मनवस्ते महाबुद्धे विष्णुकर्माधिकारिणः ।

(तेषां रसनोपस्थवैशिष्ट्यम्)

सरसाः स्नेहवन्तश्च रुधिरादिद्रवान्विताः ॥३७॥
जायन्ते रसनावन्तः पुंस्त्रीव्यञ्जन[2]भेदिताः ।

(अथ गन्धतन्मात्रोत्पत्तिः)

सुदर्शनेरितात्तस्माद्भूतादेस्तदनन्तरम् ॥३८॥
जायते गन्धतन्मात्रं

(तस्मात्पृथिव्युत्पत्तिः)

तस्माद्गन्धवती मही ।

---

1. इत्येतद्द्वन्द्वं ज्ञानक्रियात्मकम् A B C E F.
2. भेदतः A B C E F.

(पार्थिवगुणभेदाः)

काठिन्यं गौरवं स्थैर्यमित्याद्याः पार्थिवा गुणाः ॥

(घ्राणपाय्वोरुत्पत्तिः)

वैकारिकादहंकारात्सुदर्शनसमीरितात् ।
घ्राणं पायुरिति [1]द्वन्द्वं जायते द्विक्रियात्मकम् ॥

(पृथिव्यां मनूनां स्थितिः)

भुवस्ते गर्भतां यान्ति विष्णुसंकल्पचोदिताः ।

(तेषां घ्राणपायुवैशिष्ट्यम्)

[2]गुरवः स्थिरसंघाता अस्थिदन्तादिसंयुताः ॥४१॥
घ्राणवन्तः पायुमन्तः संपूर्णावयवा मुने ।

(संकल्पाद्युत्पत्तिः)

संकल्पश्चैव संरम्भः प्राणाः पञ्चविधास्तथा ॥४२॥
मनसोऽहंकृतेर्बुद्धेर्जायन्ते पूर्वमेव तु ।

(एवं मनूनां सर्वावयवपूर्णता)

एवं संपूर्णसर्वाङ्गाः प्राणापानादिसंयुताः ॥४३॥
सर्वेन्द्रिययुतास्तत्र देहिनो मनवो मुने ।

(सृष्टिप्रलयकालयोस्तुल्यपरिमाणत्वम्)

यो यादृग्वर्णितः पूर्वं कालस्तत्प्रतिसंचरे ॥४४॥

---

1. द्वन्द्वं ज्ञानकर्मात्मकं मुने, इति सर्वत्र.
2. मनवः A B C E F.

सर्गे स एव विज्ञेयो वैष्णवैस्तत्त्वचिन्तकैः ।
विद्याविपरिणामोऽयं सप्तधा वीक्षया हरेः[1] ॥४५॥
महाभूतानि तान्याहुर्विभागाः स[2]प्त ये मुने ।

(मनुविभागः)

मनवोऽपि विभज्यन्ते सुदर्शनसमीरिताः ॥४६॥
युगशो युगशः पूर्वं पश्चात्पुंस्त्रीविभेदतः ।
स्वयमागतविज्ञानाः सर्वज्ञाः सर्वदर्शिनः ॥४७॥
आत्मन्यध्यक्षमीशानमनिरुद्धं दधत्यथ ।

(मनुभिर्गर्भोत्पादनम्)

ततो ह्यध्यक्षवन्तस्ते तत्संकल्पेन चोदिताः ॥४८॥
गर्भानादधते स्त्रीषु मनवस्ते शतं शतम् ।

(तेषां ब्राह्मणादिसंज्ञाः)

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति च[3]तुर्विधाः ॥
मानवा मनुयोषिद्भ्यो जायन्ते द्वन्द्वलक्षणाः ।

(तदुत्पन्नानां मानवादिसंज्ञा)

मनुभिः संस्कृतास्ते तु स्वासु पत्नीषु मानवाः ॥
जनयन्ति बहून्पुत्रांस्ते स्युर्मानवमानवाः ।

(तेषां भगवत्कैङ्कर्यकारित्वम्)

तेषां गोत्राण्यनेकानि यैरिदं सकलं ततम् ॥५१॥

1. विद्या परिणता सेयं सप्तधा विष्णुवीक्षया D.
2. सप्तधा E.
3. चतुश्शतम् D.

चातुर्वर्ण्यमया एते भगवत्कर्मकारिणः ।

(भागवतकैङ्कर्यकारिणां मोक्षसंपत्तिः)

तेषां ये कर्म कुर्वन्ति साधवः शतवार्षिकम् ॥५२॥
विवेकज्ञानमासाद्य ते विशन्ति हरिं परम् ।

(अन्येषां संसारप्राप्तिः)

युगादियुगनिर्ह्रासाद्ये कर्मान्तरकारिणः ॥५३॥
फलाभिध्यायिनो यान्ति तत्प्रसूतां गतिं तु ते ।

(कर्महेतुकदेवादिसृष्टिः)

या सा विद्या पुरा प्रोक्ता मनुगर्भवती मुने ॥
गर्भवत्येव सा देवान्नानागुणविभेदितान् ।
दैत्यदानवरक्षांसि गन्धर्वोरगकिन्नरान् ॥५५॥
इति नानाविधा योनीर्विष्णोः संकल्पचोदिता ।
स्वसंकल्पेन सृजति ते चान्यांस्तेऽपि चापरान् ॥
मनुगर्भदशायां तु पितृदेवर्षिमानवाः[1] ।
इति सृष्टास्तया शश्वद्विद्यया ब्रह्मणा स्वयम् ॥

(मनूनां देवादीनां च कूटस्थपुरुषव्यष्टिरूपत्वम् )

कूटस्थो यः पुरा प्रोक्तः पुमान्व्योम्नः परादधः[2] ।
मनवो देवताद्याश्च तद्व्यष्टय इतीरिताः ॥५८॥

---

1. दानवाः E F.
2. परादयः A B.

(जीवानां भगवद्विभूतित्वम्)

जीवभेदा मुने सर्वे विष्णुभूत्यंशकल्पिताः ।

(महतो मेघात्मना परिणामः)

[1]अथ व्यक्तेषु मनुषु प्रजातेषु पुनः पुनः ॥ ५९ ॥
[2]विद्यैवांशेन केनापि धेनुर्भवति शाश्वती ।
धेनुरित्युच्यते विद्या मेघभावमुपागता ॥ ६० ॥
पयः क्षरति वर्षाख्यमन्नादिपरिणामवत् ।

(जीवानां ज्ञानभ्रंशहेतुकथनम्)

तत्तु वैद्यं पयः प्राश्य सर्वे मानवमानवाः ॥ ६१ ॥
[3]ज्ञानभ्रंशं प्रपद्यन्ते सर्वज्ञाः स्वत एव ते ।

(ततः शास्त्रप्रवृत्तिः)

ततः प्रवर्त्यते शास्त्रं मनुभिः पूर्वजैस्तदा ॥ ६२ ॥
तदादिष्टेन मार्गेण ते यान्ति परमां गतिम् ।
लेशतः सृष्टिरुक्तेयं भूतेः शुद्धेतरा मुने ॥ ६३ ॥
सुदर्शनेन या विष्णोरेवंभावेन भाव्यते ।

(अध्यायद्वयार्थसंक्षेपः)

भूयश्च शृणु संक्षेपमिमं नारद तत्त्वतः ॥ ६४ ॥

---

1. अनु D.
2. विद्यैवाद्येन D.
3. ज्ञानं भ्रशम् B.

एका शक्तिर्हरेर्विष्णोः सर्वभावानुगामिनी ।
देवी षाड्गुण्यपूर्णा सा ज्ञानानन्दक्रियामयी॥६५॥
भाव्यभावकभेदेन सा द्विधाभावमृच्छति ।
भावकस्तत्र संकल्पः सुदर्शनमयो हरेः ॥६६॥
अव्याघातस्तु यस्तस्य सा सुदर्शनता मुने ।
ज्ञानमूलक्रियात्माऽसौ स्वच्छः स्वच्छन्दचिन्मयः ॥
भाव्यो [1]नाम परांशो यः सा भूतिरिति गीयते ।
संकर्षणादिभूम्यन्ता शुद्धेतरविभागिनी ॥६८॥
संकर्षणादिव्यूहान्ता शुद्धसर्गमयी स्थिता ।
शक्त्यादिर्भूमिपर्यन्ता शुद्धेतरमयी मुने ॥६९॥
[2]अंशयोः पुरुषो मध्ये यः स्थितः स चतुर्युगः ।
शुद्धेतरमयं विद्धि कूटस्थं तं महामुने ॥७०॥
इतीयं विविधा भूतिर्नानातत्त्वमयी मुने ।
सुदर्शनेन मरुता ज्वालेव बहुधेर्यते ॥७१॥
आनुलोम्येन सर्गे तु प्रातिलोम्येन चाप्यये ।
मध्ये च स्थाप्यते तेन कार्यते च तथा तथा ॥

---

1. नाम्ना वरांशो D.
2. अंशयोरित्यादिः सार्धश्लोकः D पुस्तके दृश्यते.

(सुदर्शनानधीनस्य वस्तुनस्तुच्छता)

**भूतेरंशः स नैवास्ति स्वल्पाल्पोऽपि महामुने ।**
**यो न याति स्वजन्मादौ सुदर्शनविधेयताम् ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

शुद्धेतरसृष्टिवर्णनं नाम सप्तमोऽध्यायः

ओम् ।

(आदितः श्लोकाः ४६६)

ओम् ।

## अथ जगदाधारनिरूपणं नामाष्टमोऽध्यायः ।

(सृष्टौ वादिनां बहुधा विप्रतिपत्तिः)

**श्रीनारदः ।**

भगवन्देवदेवेश भगनेत्रविनाशन ।
श्रुतं मयैतदखिलं[1] तव वक्त्राम्बुजस्रुतम् ॥१॥
व्याकुलस्त्वन्तरात्मा मे नानाज्ञानविमोहितः ।
केचित्त्रैभूतिकीं सृष्टिं ब्रुवते तत्त्ववादिनः ॥२॥
चतुर्भूतमयीमन्ये केऽप्यन्ये पाञ्चभौतिकीम् ।
तां षड्धातुमयीमेके[2] सप्तधातुमयीं परे ॥३॥
अष्टप्रकृतिकां[3] केचिन्नवप्रकृतिकां[4] परे ।
दशतत्त्वमयीमेके केचिदेकादशात्मिकाम् ॥४॥
एवमुच्चावचां संख्यां तत्त्वप्रकृतिगोचराम् ।
वदन्ति मुनयः सिद्धा देवा वेदास्तथैव च ॥५॥

---

1. मयेदमखिलम् A B C E F.
2. मयीमन्ये A B C E F.
3. अष्टप्रकृतिजां D.
4. नवप्रकृतिजां D.

अण्डजामपरे सृष्टिं पद्मजामपि चापरे ।
पावकीमपरे[1] सृष्टिं केचित्कायान्तरोद्भवाम् ॥६॥
विद्यागर्भमयीमेके शून्यरूपामथापरे ।

(तत्र तत्त्वजिज्ञासया प्रश्नः)

इत्थमुच्चावचार्थास्ते नानाशास्त्रमहोदधौ ॥७॥
नानादर्शनकल्लोलजातकोलाहलोद्भटे ।
विमुह्यत्यवमप्रेयमप्लवा बुद्धिरद्य मे ॥८॥
निर्णयप्लवदानेन तामुत्तारय[2] शंकर ।

(तदुत्तरकथनारम्भः)

अहिर्बुध्न्यः ।

उचितं[3] तव देवर्षे यदयं प्रश्न ईरितः ॥९॥
मुह्यन्त्यत्र महान्तोऽपि शृणु[4] मे तत्त्वनिर्णयम् ।
परमात्मा परो देव एकः षाड्गुण्यमुज्ज्वलम् ॥१०॥

(वेदवाचोऽपि कार्त्स्न्येन तत्त्वावगाहनासामर्थ्यम्)

वागनादिरनन्तापि तत्त्वं[5] तन्नावगाहते ।
गुणैस्तटस्थितैस्तैस्तैराजानानेव[6] सा स्थिता ॥११॥

---

1. पाचिकीम् D.
2. मामुत्ता° A B C E F.
3. उचितस्तव D.
4. शृणु तत्त्वविनिर्णयम् A B.
5. तत्त्वतस्तन्न गाहते D.
6. एतदादि पादचतुष्टयं A B C E F पुस्तकेषु भ्रान्त्या त्यक्तम्.

(विप्रतिपत्तौ हेतुकथनम्)

यद्गुणे नाम्नि ये श्रान्तास्तत्र तत्त्वविदो मुने ।
मनुभिस्तद्गुणैस्तैस्तैस्ते ते तत्त्वविदां वराः[1] ॥१२॥
निर्दिशन्ति जगद्धेतुं स्वनिरूढैर्[2]महामुने ।
नानागुणनिमित्तैस्तैर्नानावक्तृसमीरितैः ॥१३॥
भेदं व्यवस्थिताः शब्दैरपर्यायविदो जनाः ।

(एकस्या अपि लक्ष्म्या नानाशब्दगोचरत्वम्)

एवं विष्णोः प्रिया[3] भाः सा शक्तिः षाड्गुण्यविग्रहा ॥
नानानामभिरेकाऽपि तत्त्वविद्भिरुपास्यते ।

(तत्त्वविदां स्वस्वदृष्टार्थवादित्वम्)

तस्यां प्रवर्तमानायां स्वसंकल्पेन सर्जने ॥१५॥
तथा निवर्तमानायां स्वसंकल्पेन संहृतौ ।
विज्ञानबलवैषम्याद्ये ये तत्त्वविदो मुने ॥१६॥
न्यूनाधिकविभेदेन यावतीर्ददृशुर्भिदाः ।
तावतीस्तावतीस्ते ते प्रोचुः शिष्याभिचोदिताः ॥
[4]अतश्चासर्वदृग्बुद्धिः संख्यासु प्रविमुह्यति ।
पितामहादयो ये च जगत्कार्याधिकारिणः ॥१८॥

---

1. वर A B C E F.
2. स्वनिरूढे E.
3. प्रभा या सा B.
4. अकथासर्व° D.

तेषां[1] न्यूनाधिभावोऽपि वक्तृभेदात्प्रकल्पितः ।
स्वातन्त्र्यमनियोज्यं तु विष्णोः षाड्गुण्यरूपिणः ॥
तद्बुद्धिरुचिवैचित्र्याद्दण्डपद्मादिसंभवः ।
[2]नानुयोजनमर्हन्ति परमात्मप्रवृत्तयः ॥२०॥

(भगवत्प्रकारानन्त्यम्)

स यथा चेष्टते सृष्टौ स्थितौ संहरणेऽपि वा ।
तथा तथा प्रकारास्ते ह्यनन्ताः कालवैभवात् ॥

(वादिनामेकैकप्रकारवादित्वम्)

एवं प्रकारनानात्वे देवस्य हरिमेधसः ।
कश्चिदेकं परोऽन्यं तु प्रकारमपरोऽपरम् ॥२२॥
धिया विदित्वा प्रोवाच शिष्याय हितकाम्यया ।

(अतः शास्त्रवैविध्यम्)

चित्रा सृष्ट्यादिशास्त्राणां प्रवृत्तिरत ईदृशी ॥२३॥
[3]यथाऽद्यत्वे मनुष्याणां कर्मवैषम्यसंभवः ।
अ[.]ोरात्रादिभेदेषु सुखदुःखव्यवस्थितिः ॥२४॥
[4]तथा ब्राह्मेष्वहःस्विष्टा सुखदुःखव्यवस्थितिः ।

(ब्राह्मकल्पानां नानारूपत्वम्)

केचिद्व्रातकुला घस्रा ब्रह्मणो मुनिसत्तम ॥२५॥

---

1. देवान्यूना° A C E F.
2. ननु D.
3. यया A B C E F.
4. इदमर्धं A B C पुस्तकेषु भ्रान्त्या त्यक्तम्.

तथा वर्षाकुलाः केचित्केचिदातपसंकुलाः ।
प्रभूतशात्रवः केचित्केचित्सुखमनोहराः ॥२६॥
अनेन निश्चयेनैव धियमास्थाय शाश्वतीम् ।
संस्तम्भयान्तरात्मानं व्यामोहस्ते विन[1]श्यतु ॥२७॥
इति नानाविधाकारं क्रियाभूतिवि[2]भेदितम् ।
निमित्तोत्पादकाकारं कारणं कथितं मुने ॥२८॥

(श्रुतार्थानुवादः)

श्रीनारदः ।

कारणं कथितं देव सर्वज्ञ वृषकेतन ।
या सा शक्तिर्जगद्धातुः कथिता समवायिनी ॥
लक्ष्मीर्नाम द्विधा सा तु क्रियाभूतिविभेदिनी ।
या क्रिया नाम संकल्पः स सुदर्शननामवान् ॥
भूतिर्नाम जगद्रूपा कालाव्यक्तपुमात्मिका ।
अशुद्धा शुद्धरूपा तु सा व्यूहविभवात्मिका ॥
क्रिया प्रवर्तिका भूतेः सा सुदर्शनरूपिणी ।
इत्येतद्दर्शितं तत्त्वं देवदेवेन मे श्रुतम् ॥३२॥

(द्वितीयप्रश्नसारणम्)

अधुना श्रोतुमिच्छामि द्वितीयं प्रश्नमीश्वर ।
आधारो नाम यः प्रोक्तो जगतां वृषभध्वज ॥३३॥

---

1. विनश्यति A B C.
2. विभूतिदम् A B C E F.

(सुदर्शनस्य जगदाधारत्वम्)

अहिर्बुध्न्यः ।

शृणु नारद तत्त्वेन य आधार उदीर्यते ।
येनेदं ध्रियते विश्वं तन्तुना मणयो यथा ॥३४॥
या सा शक्तिर्हरेराद्या लक्ष्मीर्नाम महामुने ।
या सा सर्वात्मनो विष्णोर्भावाभावानुयायिनी ॥
तस्या अल्पायुतांशांशः स्वस्वातन्त्र्यविजृम्भितः ।
क्रियाभूतिविभेदेन समुदेतीति वर्णितम् ॥३६॥
सुदर्शनेन क्रियया शंकुनेव छदो मुने ।
भूतिः सा ध्रियते श[1]श्वद्विस्तरं तत्र मे शृणु॥३७॥

(तत्र महारात्रिधरचक्रं प्रथमम्)

संहृताखिलभूतस्य स्तैमित्यं ब्रह्मणो हि यत् ।
अप्ययः सा महारा[2]त्रिस्तत्संकल्पेन धार्यते ॥३८॥
महारात्रि[3]धरो नाम तदरं वै सुदर्शनम् ।
[4]तदेकारं महच्चक्रमद्यत्वे चिन्त्यते सुरैः ॥३९॥

---

1. शश्वद्विस्तरेणात्र A B C E F.
2. महारात्रिस्सा सङ्कल्पेन A B C; महारात्रिः सङ्कल्पेनैव E.
3. परो D.
4. तदोङ्कारं महच्चक्रमाद्यत्वे A B C.

(उषश्चक्रं द्वितीयम्)

यत्सिसृक्षामयं रूपं ब्रह्मणः शक्तिसंभवम् ।
ज्वालेव वायुना वह्नेः संकल्पेन तदीर्यते ॥४०॥
[1]उषश्चक्रं तदुद्दिष्टमरद्वितयभूषितम् ।
भूतिकामैरजस्रं तद्ब्रह्मणा चैव धार्यते ॥४१॥

(उदयचक्रं तृतीयम्)

यः स संकर्षणोन्मेषो यो धारयति तं सदा ।
साक्षादुदयचक्रं [2]तद्विज्ञानत्रितयात्मकम् ॥४२॥
स संकर्षणसंकल्पो ज्ञानकामैर्निषेव्यते ।

(ऐश्वर्यचक्रं चतुर्थम्)

यः स प्राद्युम्न उन्मेष ऐश्वर्यमय ऊर्जितः ॥४३॥
वैष्णवेनैव [3]लाक्ष्मेण स संकल्पेन धार्यते ।
तद्वै प्रद्युम्नसंकल्पमैश्वर्यमयमूर्जितम् ॥४४॥
सम्यक्चतुररं चक्रमैश्वर्यस्था उपासते ।

(शक्तिमहाचक्रं पञ्चमम्)

आनिरुद्धो य उन्मेषः शक्तितेजोविदीपितः ॥४५॥
संकल्पो ब्रह्मशक्त्युत्थस्तं धारयति सर्वदा ।
तद्वै शक्तिमहाचक्रं पञ्चारं परिकल्पितम् ॥४६॥

---

1. उषचक्रम् B C D.
2. तद्विज्ञातंत्रकधारकम् A B C E F.
3. लाक्ष्म्येण सङ्कल्पेनैव E.

शक्तितेजःसमृद्ध्यर्थं विश्वेदेवा उपासते ।

(षडरचक्रं षष्ठम्)

व्यूहान्तरसमाख्यातं केशवादिद्विषट्ककम् ॥४७॥
सुदर्शनेन ध्रियते येन संकल्परूपिणा ।
षडरं तन्महाचक्रं व्यूहान्तरविभावकम् ॥४८॥
ऋत्वरं तत्समाख्यातं [1]व्रतकामा उपासते ।

(महासुदर्शनचक्रं सप्तमम्)

विभवो यः पुरा प्रोक्तः पद्मनाभादिरूर्जितः ॥४९॥
स येन ध्रियते विष्णोः संकल्पेन महामुने ।
महासुदर्शनं नाम द्वादशारं तदुच्यते ॥५०॥
विभवान्तरसंज्ञं [2]तद्यच्छक्त्यावेशसंभवम् ।
[3]धृतं तद्द्वादशारेण तत्संकल्पेन चक्रिणा ॥५१॥

(सहस्रारचक्रमष्टमम्)

यत्तु तत्परमं व्योम यद्विष्णोः पदमूर्जितम् ।
सहस्रारेण चक्रेण तत्संकल्पेन धार्यते ॥५२॥
[4]एते सौदर्शना व्यूहाः समासेन प्रकीर्तिताः ।
आधाराधेयभावेन वर्तन्ते ते स्वयं मुने ॥५३॥

1. व्रतकामैरुपास्यते B C.
2. यच्छक्त्यावेशादिसंभवम् D.
3. युतम् E.
4. एतत् A B C E F.

संकल्पः कोटिकोट्यंशः शक्तेर्भूतिस्तथा द्विधा ।
शक्तिः सा वैष्णवी सत्ता[1] बहुधैवं प्रभासते[2] ॥५४॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
जगदाधारवर्णनं नामाष्टमोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ५२०)

---

1. शक्ता A B C F; सक्ता E.
2. प्रकाशते D.

ओम् ।

## अथ अशुद्धजगदाधारनिरूपणं नाम नवमोऽध्यायः ।

(तत्र प्रथमं पौरुषचक्रम् )

अहिर्बुध्न्यः ।

आधारः कथितः शुद्धः शुद्धा सा येन धार्यते ।
भूतिर्व्यूहादिरूपेण या सा देवी प्रवर्तते ॥१॥
पुमाद्यवनिपर्यन्ता यथा शुद्धेतरात्मिका ।
सा येन धार्यते चक्रं तत्संकल्पमयं शृणु ॥२॥
त्र्यरं तत्पौरुषं चक्रं पुरुषो येन धार्यते ।

(अथ शक्त्यादिचक्राणि)

चक्रं त्रिंशदरं प्रोक्तं शक्तिः सा येन धार्यते ॥३॥
तादृशं नैयतं चक्रं नियतिर्येन धार्यते ।
षडरं कालचक्रं तत्स कालो येन धार्यते ॥४॥
सत्त्वं रजस्तमश्चैव धार्यन्ते यैर्महामुने ।
तानि त्वाधारचक्राणि त्र्यराणीति विदुर्बुधाः ॥५॥
चक्रमेकादशारं तु बुद्धिः सा येन धार्यते ।

अष्टारं तन्महाचक्रमहंकारस्य धारकम् ॥ ६ ॥
एकारं वैयतं चक्रं द्व्यरं तद्वायुधारकम् ।
त्र्यरं तैजसमाख्यातमाप्यं चतुररं मुने ॥ ७ ॥
पञ्चारं पार्थिवं चक्रं पृथिवी येन धार्यते ।
गुणचक्राण्यरैः सर्वाण्यङ्कितानि त्रिभिस्त्रिभिः ॥
एकादशविधं चक्रमैन्द्रियं द्वियुगारकम् ।
इयमाधारशक्तिस्ते प्रोक्ता प्रातिस्विकी मुने ॥ ९ ॥

(अथ महाविभूतिचक्रम्)

एकधारं महच्चक्रं महाभूतिकरं[1] शृणु ।
महाकेतुपटी यद्वद्वितता व्योम्नि धार्यते ॥ १० ॥
अनिशं पावमानेन[2] पवमानेन वै मुने ।
संकर्षणादिभूम्यन्ता विष्णुशक्तिमयी तथा ॥ ११ ॥
निरालम्बे पटे[3] भूतिः संकल्पेनैव धार्यते ।
तत्संकल्पमयं चक्रमनन्तारं महामुने ॥ १२ ॥
दिव्यं महाविभूत्याख्यमवाङ्मनसलाञ्छितम् ।
अप्रमेयमनाद्यन्तं भावाभावस्वलक्षणम् ॥ १३ ॥
अनन्तारमपर्यन्तं पर्यन्तकुलसंकुलम् ।
ब्रह्माण्डकोटिकोट्योघकोट्यर्बुदविभावितम् ॥ १४ ॥

---

1. धरम् D.
2. पञ्चमानेन A B C; पवमानेन E.
3. पदे सर्वैः A B C.

महाभूतसहस्रौघसहस्रौघविभावनम् ।
ज्योतिरिङ्गणसच्छायैरिन्द्रियैः कोटिकोटिशः ॥
अङ्कितं क्षुद्रमेघाभैर्ब्रह्माण्डैरनुचित्रितम् ।
महाभूतमयीभिस्तु क्वचिदद्भिरिवाततम् ॥ १६ ॥
विप्रुड्भिरिव वर्षाणां विततं वैष्णवं पदम् ।
महाभूतैः क्वचिद्दीप्तं ज्योतिर्भिरयुतायुतैः[2] ॥ १७ ॥
वीजितं भूतपवनैर्व्यजनोत्थैरिव क्वचित् ।
क्षुद्रावकाशसंकाशैराकाशैः कोटिकोटिशः ॥ १८ ॥
छिद्रितं विविधाकारैरहंकारैरहंकृतम् ।
अमहद्भिर्महद्भिश्च कोटिकोटिविभागिभिः ॥ १९ ॥
अङ्कितं विविधाकारैस्तमोभिर्बहुलं कृतम् ।
क्वचिद्विविधसंतापचलनैरयुतायुतैः ॥ २० ॥
रजोभी रञ्जितं क्षुद्रैर्विशदैर्लघुभिः क्वचित् ।
अङ्कितं बहुभिः सत्त्वैर्विमलैः कोटिकोटिशः ॥२१॥
त्रिविधैः षट्प्रकारैश्च द्विषट्कप्रविभागिभिः[3] ।
चतुर्विंशतिसंभेदैस्त्रिंशदर्धद्वयोज्ज्वलैः ॥ २२ ॥
षष्टिषट्कसमाकीर्णैः कोटिकोटिविभागिभिः[4] ।
कालैरनेकसाहस्रैरयुतायुतसंकुलैः ॥ २३ ॥

---

1. महासहस्रकोट्योघ B.
2. ज्योत्स्नाभिः A C.
3. प्रति E.
4. विभागशः A B C E F.

कीर्णं नियतिरूपेण नानानियमनात्मना ।
कोटिकोटिसहस्रौघकोटिकोटिगुणेन च ॥२४॥
शक्त्या नानाविधाकारमधुकोशनिभात्मना ।
निष्यन्दमानतत्त्वौघ[1]स्वरूपमधुविप्रुषा[2] ॥२५॥
कोटिकोटिसहस्रौघनियुतायुतरूपया ।
स्निग्धं क्वचिदिवात्यर्थं पुंसा[3] क्वचिदिवास्थितम् ॥
शुक्लरक्तासिताकारकर्मकल्पितरूपिणा ।
अनेकमशकाकीर्णोदुम्बरप्रतिमात्मना ॥२७॥
नानाजीवविभेदेन नानाफलविधाजुषा ।
शुभाशुभोभयाकारवासनाजटिलात्मना ॥२८॥
अनेकक्लेशकोशेन पुरुषेणास्थितं क्वचित् ।
निर्मलानन्दसंबोधमहासत्तामयेन च ॥२९॥
नित्यैर्मुक्तैर्निराबाधैर्निर्मलानन्दलक्षणैः ।
साक्षात्पश्यद्भिरीशानं नारायणमनामयम् ॥३०॥
देव्या लक्ष्म्या समासीनं पूर्णषाड्गुण्यदेहया ।
नित्योदितैर्नित्यतृप्तैरतिक्रान्तैस्तमो महत् ॥३१॥
आत्मभिः शोभितेनैवं वरेण[4] नियताङ्कितम् ।
षाड्गुण्यविग्रहैर्व्यूहैः पुरुषैः पुष्करेक्षणैः ॥३२॥

---

1. सत्त्वौघ F.
2. विप्रुषः A C E F.
3. पुंसा च क्वचिदास्थितम् D.
4. परेण E F.

आस्थितं जगदुत्पत्तिस्थितिसंहृतिकारिभिः ।
इति व्याप्तवतीमेतां विभूतिं वैष्णवीं पराम् ॥ ३३ ॥
चित्राम्बरधरां[1] सम्यग्दधदात्मानमात्मना ।
संकल्पो वैष्णवो योऽयं मणीन्सूत्रमिवास्थितः[2] ॥
तदनन्तारमव्यक्तं महच्चक्रं सुदर्शनम् ।
[3]भावितं स्मृतिमात्रेण भावयत्यखिला गतीः ॥ ३५ ॥

(अथ संहृतिचक्रम्)

यो[4] जिहीर्षामयो नित्यः संकल्पो वैष्णवः परः ।
अनन्तारमपर्यन्तं तत्संहृतिसुदर्शनम् ॥ ३६ ॥
एक एव तु संकल्पो रूपैर्नानोपगीयते ।
अनन्तमपरिच्छेद्यमप्रमेयमनूपमम् ॥ ३७ ॥
अतरङ्गार्णवाकारमनभ्राम्बरसंनिभम् ।
[5]एकं तत्परमं ब्रह्म षाड्गुण्यस्तिमितं महत् ॥ ३८ ॥
भावाभावमयी तस्य शक्तिरेकानपायिनी ।
तद्धर्मधर्मिणी दिव्या ज्योत्स्नेव हिमदीधितेः ॥
तस्य संकल्पसंकल्पो[6] रूपव्याप्रियमाणता ।
स्तैमित्यस्थितिसंकल्पस्तिमितं तत्सुदर्शनम् ॥ ४० ॥

---

1. निभां B C E.
2. स्थितान् A B C.
3. भवितम् B C.
4. तत्संहृतिमयो D.
5. एकान्तं परमं ब्रह्म षाड्गुण्यं निर्मलं महः A B C E F.
6. संकल्पौ रूपां वा D.

(अथ चलनचक्रम् )

प्रभवे चाप्यये वापि स्थितौ वापि महामुने ।
[1]चलत्तापूर्वरूपं यः संकल्पस्तत्र वर्तते ॥ ४१ ॥
चलनं नाम तच्चक्रं सुदर्शनमयं महत् ।

(तस्य त्रैविध्यम् )

भेदास्त्रयोऽस्य विज्ञेयास्तन्त्रविज्ञानपारगैः ॥ ४२ ॥
महासृष्टिमयं तत्र समासव्यासलक्षणम् ।
नानाशक्तिसमाकीर्णं तच्च ते कथितं पुरा ॥ ४३ ॥
महासंहारचक्रं च समासव्यासलक्षणम् ।
तादृगेवात्र विज्ञेयं तच्च ते दर्शितं पुरा ॥ ४४ ॥
स्थितिचक्रं तु यन्मध्ये समासव्यासलक्षणम् ।
तस्य वक्ष्यामि वि[2]स्तारं यत्प्रमाणतया स्थितम् ॥
यथा ह्ये[3]को नटो भावैर्नानारूपैर्विभज्यते ।
तथा संकल्प एवैकस्तैस्तैर्भेदैर्विभज्यते ॥ ४६ ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
अशुद्धजगदाधारनिरूपणं नाम नवमोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ५६६)

---

1. चलच्चित्तापूर्वरूपस्संकल्पस्तत्र वर्तते A B C E F.
2. सर्वत्रायमेव पाठः
3. ह्येकं नभो A C.

ओम् ।

## अथ अर्थात्मकप्रमाणनिरूपणं नाम दशमोऽध्यायः ।

श्रीनारदः ।

भगवन्देवदेवेश भवानीजीवितेश्वर ।
लोकनाथ जगन्नाथ देवानामभयप्रद ॥ १ ॥
नमस्ते त्रिपुरघ्नाय तत्त्वविज्ञानसिन्धवे ।
दशाव्ययाय ते नित्यं षडङ्गाय नमो नमः ॥ २ ॥
यदेतदुदितं नित्यं जगत्कारणमव्ययम् ।
यच्चाधारतया प्रोक्तं संकल्पाख्यं सुदर्शनम् ॥ ३ ॥
तदेतदखिलं देव विष्णुसंकल्पजृम्भितम् ।
समासव्यासरूपेण[1] तत्त्वतो[2] मेऽवधारितम् ॥ ४ ॥
इदानीं श्रोतुमिच्छामि विस्तरेणान्तकान्तक ।
किं तत्प्रमाणमित्युक्तं कीदृशं[3] किंविधं च तत् ॥५॥

---

1. भेदेन A B C E F.
2. तत्त्वमेवोपधारितम् A B C E F.
3. कीदृक्कतिविधं A B C E F.

किमर्थं किंमयं देव तन्मे विस्तरशो[1] वद ।
वक्ता सर्वस्य गुह्यस्य त्वदन्यो नैव विद्यते ॥६॥

(प्रमाणनिरूपणप्रतिज्ञा)

अहिर्बुध्न्यः ।

शृणु नारद तत्त्वेन प्रमाणस्थितिमव्ययाम् ।
विश्वं यत्रैव विश्रान्तं[2] सदेवासुरमानुषम्[3] ॥७॥

(प्रमाणस्वरूपनिरूपणम्)

मध्यमो यः स संकल्पो विष्णोः स्रष्टवतो जगत् ।
शाश्वते तिष्ठति[4] व्यक्तं जगन्मार्ग इतीदृशम्[5] ॥८॥
[6]तत्तत्प्रमाणमित्युक्तं स्थितिचक्रं महामुने ।

(तद्विभागः)

समष्टिव्यष्टिभावेन तद्द्विरूपं विभाव्यते ॥९॥

(समष्टिप्रमाणस्वरूपम्)

ऐकरूप्येण संकल्पो यः सर्वविषये[7] स्थितः ।
महास्थितिमयं चक्रं तदेतत्कीर्तितं मुने ॥१०॥

---

1. विस्तरतो E F.
2. विश्वस्तम् D.
3. मानवम् D.
4. तिष्ठतु D.
5. इतीदृशः A C E F.
6. तत्प्रमाणमिति प्रोक्तम् D.
7. विषयस्थितिः E.

(व्यष्टिप्रमाणस्वरूपम्)

तत्त्वेयत्ता[1] समस्तात्मन्यस्मिन्नायततेऽखिला[2] ।
प्रातिस्विकी व्यवस्था या यस्य सत्त्वस्य यादृशी ॥
परिणामक्रियासाध्यस्थानरूपादिगोचरा[3] ।
तद्व्यष्टिमये चक्रे प्रमाणे सा व्यवस्थिता ॥ १२ ॥
एकचेष्टादिको योऽर्थो यश्च सृष्ट्यादिलक्षणः ।
शास्त्रशास्त्रार्थतत्साध्यव्यवस्थात्मा च यो मुने ॥
वासुदेवादिके व्यूहे स्वस्वसंकल्पसंभवः ।
तदाद्यं भगवद्रूपं चक्रं स्थितिमयं महत् ॥ १४ ॥
प्रमाणं येन तत्सर्वमियत्तां प्रतिपद्यते ।

(तस्यैव विस्तरेण प्रतिपादनम्)

यच्च तत्परमं व्योम दिव्यसंभोगलक्षणम् ॥ १५ ॥
स्थितिप्रमाणरूपेण तत्संकल्पेन वै हरेः ।
अनियत्तमसंकोचमनन्तं व्यवतिष्ठते ॥ १६ ॥
अचेतनानां[4] तत्त्वानां या सा योनिः परा मुने ।
कालकाल्यमयी शक्तिरियत्ता तत्त्रिधा परा ॥ १७ ॥

---

1. तत्तेयत्ता A B C E F.
2. ॰लम् D.
3. परिणामक्रियाङ्गस्थ A B C.
4. अचेतनानामित्यादिकं श्लोकद्वयं D पुस्तके "प्रमाणे व्यवतिष्ठते" इत्येतदनन्तरं दृश्यते.

स्वरूपकार्यभावाद्यौ सा प्रमाणनिबन्धना ।
नियतिः काल इत्येते कार्यस्यापि हि ते मते[1]॥१८॥
शुद्धाशुद्धमये मध्ये यः पुमान्कूटवत्स्थितः ।
नानाजीवमहायोनिस्तस्य या स्थितिरव्यया ॥१९॥
इयत्ता या च सा चक्रे प्रमाणे व्यवतिष्ठते ।
इयत्ताया भिदा या च कलाकाष्ठादिगोचरा ॥२०॥
सा प्रमाणमये चक्रे [2]सर्वाप्यायतते मुने ।
सत्त्वादीनां स्वरूपं यद्या प्रवृत्तिः फलं च यत् ॥२१॥
इयत्ता तत्र सर्वत्र सा प्रमाणसुदर्शनात् ।
यद्रूपत्रितयं बुद्धेर्धर्माद्या या च विक्रिया ॥२२॥
व्यापारस्पन्दनिर्णीतिर्निमेषात्मा च योऽखिलः ।
योऽत्रेयत्तामयो भावः स प्रमाणसुदर्शनात्[3] ॥२३॥
अभिमानो द्विधा योऽपि संरम्भो योऽप्यहंकृतेः ।
यश्च कामादिको भावस्तत्रेयत्तास्थितिश्च या ॥२४॥
सा प्रमाणमये चक्रे संकल्पेऽस्मिन्सुदर्शने ।
पञ्चानां पञ्चकं यच्च संकल्पानामवस्थितम् ॥२५॥
तादृशं[4] च विकल्पानां तदेतद्द्वितयं मुने ।
इयत्ता या स्थिता व्याप्य सा प्रमाणसुदर्शनात् ॥

1. द्वे कालस्य भिदे मते D; कालस्यापि हि ते मते A.
2. सर्वाप्यायतता A E F; सर्वाप्याययता B C.
3. ॰नम् A B C; ॰नः E F.
4. तादृशाम् E.

तानवं पाटवं यच्च यच्चालोचनपञ्चकम् ।
शान्तघोरादिकं[1] रूपं यच्च धीन्द्रियपञ्चके ॥२७॥
वचनादानविक्रान्तिमोदोत्सर्गमयं च यत् ।
शान्तघोरादिकं रूपं यत्कर्मेन्द्रियपञ्चके ॥२८॥
तत्रेयत्तामयं रूपं यच्च स्थितिमयं वपुः ।
प्रमाणे वैष्णवे सर्वं तत्संकल्पसुदर्शने ॥२९॥
व्यूहावकाशलघुताचेष्टाप्रेरणशोषणम् ।
व्यूहावकाशव्यक्तार्द्रस्नेहक्षुद्रत्वमप्युत[2] ॥३०॥
स्थैर्यपार्थिवकाठिन्यमित्येतद्भौतिकं वपुः ।
एकद्वित्रिचतुःपञ्चगुणव्यूहमयी स्थितिः ॥३१॥
यैस्तद्व्याप्य[3] स्थितेयत्ता सा प्रमाणसुदर्शनात् ।
तत्त्वे तत्त्वे च मर्यादा या या शश्वदवस्थिता ॥
सा सा प्रमाणचक्रस्य संकल्पस्य हरेर्गतिः ।
इतीयं स्थितिमर्यादेयत्ता चक्रे प्रतिष्ठिता[4] ॥३३॥
विष्णुसंकल्पसंभूतां स्थितिमन्यां मुने शृणु ।
प्रतिबन्धनिरासेन या स्वभावगतिर्मुने[5] ॥३४॥

---

1. घोरादिरूपं यत् यच्च B E F.
2. रूपं प्रकाशव्यक्तार्द्रस्नेहचक्षुस्स्वयं प्लुता A C E.
3. यत्र व्याप्य A B C E F.
4. प्रकीर्तिता D.
5. कृतिः D.

तत्त्वानां तात्त्विकानां च सा स्थितिः कथ्यते मुने ।
गुणान्तरानुग्रहेण यः सत्त्वोन्मेष ऊर्जितः ॥३५॥
धर्मज्ञानादिरूपोऽसौ सुदर्शनसमीरितः ।
परिमाणविशेषः स बोध्य[1]स्त्रैलोक्यधारकः ॥३६॥
शनैराचर्यमाणोऽसौ सत्त्वोज्ज्वलितबुद्धिभिः ।
बि[2]भर्ति रोदसी शश्वदन्नवृष्ट्यादिदानतः ॥३७॥
गुणान्तरानुग्रहेण तमसो यः स उद्यमः ।
अधर्मादिस्वरूपोऽसौ विष्णुसंकल्पचोदितः ॥३८॥
शनैराचर्यमाणोऽसौ तमोमलिनबुद्धिभिः ।
अन्नवृष्ट्यादिनाशेन विनाशयति रोदसी ॥३९॥
सत्त्वस्योपद्रवः शश्वदतोऽन्यस्माद्गुणद्वयात् ।

(शस्त्रव्यूहप्रतिपादनम्)

धर्मसंस्थापनायाथ निरसिष्यन्नधार्मिकान् ॥४०॥
जनार्दनत्वमीशानो यदा विष्णुः प्रपद्यते ।
तदा देवस्य संकल्पः सुदर्शनसमाह्वयः ॥४१॥
आयुधादिस्वरूपेणाकारत्वं प्रतिपद्यते ।
चक्रलाङ्गलसौनन्दशङ्खशार्ङ्गशरात्मना ॥४२॥
खड्गखेटकरूपेण पाशाङ्कुशपरश्वधैः ।
दण्डकुन्तस्वरूपेण दम्भोलिमुसलात्मना ॥४३॥

---

1. बद्ध A; बौद्ध E F.
2. बिभर्तीत्याद्यमर्धचतुष्टं D पुस्तके भ्रान्त्या त्यक्तम्.

शतवक्त्राग्निरूपेण कुन्तशक्तिमयात्मना ।
तथा शूलस्वरूपेण खर्वाङ्गाद्यायुधात्मना ॥४४॥
एवं नानाविधै रूपैस्तै[1]स्संकल्पविकल्पितैः ।
उदेति ज[2]गतो वृद्ध्यै नारायणकराश्रयी ॥४५॥
इति शस्त्रमयो व्यूहो लेशतस्ते निदर्शितः ।
अपरोऽस्त्रमयो व्यूहः सौदर्शन उदीर्यते ॥४६॥

(अस्त्रव्यूहप्रतिपादनम् )

रूपमास्थाय दिव्यं तदङ्गप्रत्यङ्गभूषणम् ।
ब्रह्मक्षत्रादिभावेन मुखबाहूरुपादतः ॥४७॥
ब्रह्मास्त्रादिमयं व्यूहं प्रवर्तकनिवर्तकम् ।
सृजत्यशेषरक्षार्थं षष्टिद्वितयसंमतम् ॥४८॥
प्रजापतिपितृब्रह्मदेवेभ्यश्च तथा तथा ।
दिव्यो नानाविधाकारः समुदेत्यस्त्ररूपवान् ॥४९॥
ब्रह्मदेवर्षिराजर्षिष्वपि मन्त्रमयात्मसु ।
अनुव्याहारशापादिरूपेणैवावतिष्ठते ॥५०॥
न तदस्ति पृथिव्यां वा दिवि वा मुनिसत्तम ।
निग्रहेऽनुग्रहे वापि यत्रायं नैव साधनम् ॥५१॥

---

1. तत्तत्कल्प D.
2. जगतामृध्यै D.

प्रमाणव्यूह एतावानर्थाकारो निदर्शितः ।
सुदर्शनस्य देवस्य शब्दाकारमथो शृणु ॥५२॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम्

अर्थात्मकप्रमाणव्यूहनिरूपणं नाम दशमोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ६१८)

ओम् ।

## अथ शब्दात्मकप्रमाणव्यूहनिरूपणं नाम

## एकादशोऽध्यायः ।

श्रीनारदः ।

नमः[1] समस्तगीर्वाणसुखसौभाग्यदायिने ।
शंकराय गिरीशाय गौरीदयित ते नमः ॥१॥

(शब्दात्मकप्रमाणप्रश्नः)

श्रुतः प्रमाणरूपोऽयं व्यूहार्थो यन्मयाऽखिलः ।
शब्दाकारो य उद्दिष्टस्तं मे वद सुरेश्वर[2] ॥२॥

(तत्प्रतिविवक्षयोपोद्धातः)

अहिर्बुध्न्यः ।

आदिसर्गे पुरावृत्ते नानाभावविभूषिते ।
आसीच्छक्तिमतो विष्णोरियं चिन्ता सुखोदया ॥

---

1. नमः सर्वज्ञगीर्वाणशुभ° A B C E F.
2. महेश्वर D.

(आदिसर्गे भगवतश्चिन्ताप्रकारः)

विपुलेयं कृता सृष्टिर्मया सत्त्वगुणोत्तरा ।
प्रत्यक्षसर्वधर्मार्था निराबाधा[1] सुखोत्तरा ॥४॥
प्रजेयमभिनिर्वृत्ता देवर्षिब्रह्मसंकुला[2] ।

(सत्त्वविवृद्ध्या परमपुरुषप्राप्तिपूर्वकं स्वरूपाविर्भावः)

तत्त्वज्ञानसमायोगात्सद्धर्मकरणादपि ॥५॥
अचिरेणैव मां प्राप्य स्वीयं भावं भजिष्यते ।

(रजस्तमोविवृद्ध्या सत्त्वह्रासः)

रजस्तमोगुणोद्रेकः कालेनैव[3] भविष्यति ॥६॥
तदुन्मेषवशेनैव सत्त्वमप्युपचोष्यते ।

(तदा दैत्याद्याविर्भावः)

तदा प्रादुर्भविष्यन्ति दैत्यदानवराक्षसाः ॥७॥

( तैर्वैदिकमर्यादाविलोपनम् )

तैरियं सात्त्विकी दिव्या मर्यादा चालयिष्यते ।

(ज्ञानप्रमोषाद्धर्मतिरोधानम् )

रजस्तमोगुणोन्मेषात्सम्यग्ज्ञाने विनाशिते ॥८॥
ज्ञानहेतुः स धर्मोऽपि तिरोधानं गमिष्यति ।

---

1. निरायासा D.
2. देवब्रह्मर्षि D.
3. कालेन तु D.

(ततः प्रजाक्षोभः)

ततश्चेयमनाधारा प्रजाऽशुद्धा विनङ्क्ष्यति ॥९॥

(तदा भगवदवताराणां लब्धावकाशता)

तत्र रूपैरनेकैर्मे कृत्यं शश्वद्भविष्यति ।
तेषूपकरणापेक्षा नानाकारा भविष्यति ॥१०॥

(धर्मस्थापननिश्चयः)

आविश्याविश्य भूतानि स्वेन रूपेण मायया ।
तैस्तैः साधनसंभेदैर्निरस्य सुकृतद्विषः ॥११॥
सुकरा धर्ममर्यादा तत्र तत्र भविष्यति ।

(अधर्मनिराससाधनद्वैविध्यम्)

साधनं च द्विधा कार्यं धर्मद्वेषिनिराकृतौ ॥१२॥
शस्त्रास्त्रव्यूहरूपेण शास्त्ररूपेण चैव हि ।

(भगवत्संकल्पात्तदुभयोत्पत्तिः)

इत्युक्तार्थस्वरूपं[1] हि शस्त्रास्त्रौघसमाकुलम् ॥१३॥
व्यूहं ससर्ज संकल्प्य स्वेन संकल्पतेजसा ।
स च सौदर्शनो व्यूहो मर्यादाधारणक्षमः ॥१४॥
प्रमाणरूप उद्दिष्टो वक्ष्यते च तथा तथा ।
प्रमाणरूपशास्त्रार्थः[2] संकल्पो वैष्णवो हि यः ॥

1. इत्युक्तार्थस्वरूपं स शब्दशस्त्रौघसंकुलम् A B C; शास्त्रौघ E F.
2. प्रमाणरूपशास्त्रात्मा A B C F; प्रमाणरूपः शास्त्रार्थः E.

उदितो ब्रह्मणस्तस्माद्यथा तदवधारय ।

(आदिशास्त्रस्वरूपवर्णनम् )

संकल्पमयमेवैकं [1]सकलान्तस्तमोनुदम् ॥१६॥
निर्घातशब्दवद्व्योम्नः शास्त्रमेकमभूत्तदा ।
वर्णार्थैः संभृतैर्वर्णैश्चिदानन्दमहोर्मिभिः ॥१७॥
विष्णुशक्तिसमुद्रोत्थैर्मणिभिर्मौक्तिकैरिव ।
प्रोतं सौदर्शनं रूपं विष्णोः संकल्पकल्पितम् ॥
तद्विज्ञानमयं शास्त्रं सद्धर्मप्रतिपादकम् ।
नियुताध्यायि यत्प्रोक्तं कामपालेन शाश्वतम् ॥

(तस्य सर्वशास्त्रार्थगर्भितत्वम् )

पुरुषार्थैश्चतुर्भिस्तदन्वितं हेतुसंकुलम् ।
ऋग्यजुःसामभिर्जुष्टमङ्गिरोभिरथर्वभिः ॥२०॥
पदवाक्यप्रमाणार्थैर्विकल्पैर्बहुभिश्चितम् ।
अलंकृतं शुभैस्तैस्तैः समयैर्दिव्यमानुषैः ॥२१॥
तै तैर्विकल्पितैः कल्पैश्छन्दोभिर्विविधैर्[2]वृतम् ।
कालोपग्रहसंख्याभिः प्रकृतिप्रत्ययैः स्वरैः ॥२२॥
विभक्तिकारकैर्लिङ्गैः [3]स्वैरैः प्रकृतिसन्धिभिः ।
संज्ञाभिः साधिकाराभिर्भूषितं परिभाषया ॥२३॥

---

1. संकल्पं तत्तमोनुदम् A B C E F.
2. स्मृतम् A B C E F.
3. रूपैः E F.

आदेशैरागमैर्लोपैर्विकारैश्चाप्युपाधिभिः ।
वृत्तिभिर्विविधाभिश्च वाक्यैरुपपदैरपि ॥२४॥
अव्ययैरुपसर्गैश्च नामाख्यातनिपातकैः[1] ।
मात्रावृत्तिस्वरबलैरभिनिष्ठानसामभिः ॥२५॥
यमरङ्गविभागैश्च भूषितं पदभङ्गिभिः ।
वर्णागमविकल्पैश्च तथा वर्णविपर्ययैः ॥२६॥
कल्पनाभिश्च [2]लघ्वीभिर्विकृतेः प्रकृतेरपि ।
निरुक्तकल्पैर्विविधैर्नानानिगमनैरपि ॥२७॥
ग्रहनक्षत्र[3]राशिस्थैर्विकल्पैर्गणनोत्थितैः ।
होरास्कन्धविकल्पैश्च विधानैः फलकल्पितैः ॥२८॥
विध्यर्थवादमन्त्रोत्थैर्विचारैः [4]कर्मकल्पनैः ।
अङ्गयुक्तिक्रमोहैश्च तन्त्रावापातिदेशनैः ॥२९॥
अधिकारैरनेकैश्च विचारैर्वाक्यगोचरैः ।
प्रमाणकल्पितैर्न्यायैर्निग्रहच्छलजातिभिः ॥३०॥
द्रव्यकर्मविकल्पैश्च गुणसामान्य[5]कल्पनैः ।
चातुर्होत्रविकल्पैश्च चातुर्वैद्य[6]विजृम्भितैः ॥३१॥

---

1. निपातनैः A.
2. बह्वीभिः A B C; लघ्वीभिः प्रकृतेर्विकृतेरपि D.
3. राशीभिः A B C E F.
4. मन्त्रकल्पनैः B C D.
5. कल्पितैः D.
6. विकल्पितैः A B C E F.

चातुराश्रम्यकल्पैश्च चातुर्वर्ण्यविकल्पितैः ।
संस्कारकल्पैर्विविधैर्नित्यकाम्यक्रियाक्रमैः ॥३३॥
इतिहासपुराणाभ्यां विविधाभ्यां समन्वितम् ।
विविधैश्च प्रसंख्यानैः स्वप्रकृत्यादिकल्पितैः ॥
पुमीश्वरविकल्पैश्च परिणामविकल्पितैः ।
अवस्थालक्षणव्याख्याधर्म[1]क्लृप्तिविचित्रितम् ॥
प्रमाणानां ससर्गाणां नानाकल्पनयान्वितम् ।
लेपालेपविचारैश्च पुरुषाव्यक्तगोचरैः ॥३५॥
तत्त्वतात्त्विककल्पैश्च नानागतिविचिन्तनैः ।
मुक्तिक्रमविचारैश्च ख्यातिकल्पैरनेकशः ॥३६॥
ज्ञानाज्ञानसमाख्यातगुणदोषविचारणैः ।
गुणत्रयविकल्पैश्च [2]सर्गसंयोगचिन्तनैः ॥३७॥
[3]अन्वितं विविधैः सांख्यैः प्रसंख्यानकृतक्रमैः ।
योगप्रकारकल्पैश्च वृत्तीनां कल्पनैरपि ॥३८॥
अभ्यासकल्पैर्विविधैश्चातुर्वैराग्यकल्पनैः ।
अन्तरङ्गबहिर्भूतयोगाङ्गपरिचिन्तनैः ॥३९॥
क्लेशकर्मविपाकानामाशयानां च वर्णनैः ।
तापसंस्कारचिन्ताभिर्दुःखभेदविचिन्तनैः ॥४०॥

---

1. कर्मक्लृप्ति A B C.
2. "परिणामविकल्पनैः" इत्यपि D पुस्तके पाठः.
3. आस्थितम् D.

तैस्तैश्चतुरधिष्ठानकल्पनैः कल्पितं[1] पृथक् ।
उपादेयस्य हेयस्य हानोपादानयोरपि ॥४१॥
स्वरूपचिन्तनैश्चित्रैर्[2]भोगकामविकल्पनैः ।
क्रियायोगैरनेकैश्च चित्तसंस्कारसाधनैः ॥४२॥
सिद्धिभिश्च विचित्राभिश्चित्तस्थाभिरलंकृतम् ।
पतिपाशपशुव्याख्याविकल्पैर्हेतुचित्रितैः ॥ ४३ ॥
शुद्धाध्वकल्पनाभिश्च क्रियाज्ञानविभेदतः ।
अर्थपंचकचिन्ताभिरनेकाभिरलंकृतम् ॥४४॥
शक्तिपञ्चकचिन्ताभिर्मलत्रयविचारणैः ।
भोगोपकरणाख्यानैः पुंसां रूपविकल्पनैः ॥४५॥
दीक्षाप्रतिष्ठाकल्पैश्च धर्मैः पाशुपतैरपि ।
इति नानाविधाकारबुद्धिकल्पविचित्रया ॥४६॥
युक्तं कल्पनया शश्वत्कृतनानाधिकारया ।
अधिकारेण सद्धर्मान्व्याचक्षाणमनेकधा ॥४७॥
नियुताध्यायकं पूर्वमासीत्संकर्षणोदितम् ।
संकल्पमयमाद्यस्य विष्णोः संकल्पजात्किल ॥४८॥

(तस्य शास्त्रस्य भगवत्प्रीतिहेतुत्वम् )

तेन शास्त्रेण ते दिव्या मनवो मानवाश्च ते ।
ये प्रोक्ता आदिसर्गे ते तथा मानवमानवाः ॥

---

1. परिकल्पितम् B C.
2. चित्रैर्योग D.

सत्क्रियाभिरनल्पाभिर्नारायणमतोषयन्[1] ।

(तस्य शास्त्रस्य मन्दप्रचारता)

अथ कालविपर्यासाद्युगभेदसमुद्भवे ॥ ५० ॥
त्रेतादौ सत्त्वसंकोचाद्रजसि प्रविजृम्भिते ।
कामं कामयमानेषु ब्राह्मणेषु महात्मसु ॥ ५१ ॥
मन्दप्रचारमासीत्तच्छासनं यत्सुदर्शनम् ।

(वाच्यायनादिभिस्तच्छास्त्रविभजनम् )

ततो मोहाकुले लोके लोकतन्त्रविधायिनः ॥ ५२ ॥
संभूय लोककर्तारः कर्तव्यं समचिन्तयन् ।
अपान्तरतपा नाम मुनिर्वाक्संभवो हरेः ॥ ५३ ॥
कपिलश्च पुराणर्षिरादिदेवसमुद्भवः ।
हिरण्यगर्भो लोकादिरहं पशुपतिः शिवः ॥ ५४ ॥
एते तप्त्वा तपस्तीव्रं वर्षाणामयुतं शतम् ।
आदिदेवमनुज्ञाप्य देवदेवेन चोदिताः ॥ ५५ ॥
सुदर्शनस्य लेशेन तत्संकल्पेन संयुताः ।
विज्ञानबलमासाद्य धर्माद्देवप्रसादजात्[2] ॥ ५६ ॥
आविर्भूतं तु तच्छास्त्रमंशतस्ते ततक्षिम ।

(तत्र वाच्यायनेन वेदविभजनम् )

ततश्च भगवान्पूर्वमपान्तरतपा मुनिः ॥ ५७ ॥

---

1. अकल्पाभिः D.
2. धर्मं देवप्रसादजम् D.

हरेर्वाच्यायनः[1] पुत्रो यावदात्तं च वै ततः ।
उदभूत्तत्र धीरूपमृग्यजुःसामसंकुलम् ॥५८॥
विष्णुसंकल्पसंभूतमेतद्वाच्यायनेरितम् ।

(कपिलेन सांख्यविभजनम् )

ततश्च कपिलः शास्त्राद्यावदंशमुदारधीः ॥५९॥
तत्सांख्यमभवच्छास्त्रं प्रसंख्यानपरायणम् ।

(हिरण्यगर्भेण योगशास्त्रविभजनम्)

हिरण्यगर्भो लोकादिर्यत्ततश्चादिशासनात् ॥६०॥
यमाद्यङ्गमभूदेतद्दिव्यं योगानुशासनम् ।

(शिवेन पाशुपतविभजनम् )

अहं ततश्च यच्छास्त्रादंशान्नानाव्रताकुलात् ॥६१॥
अभूत्पाशुपताख्यं तत्पशुपाशविमोचनम् ।

(भगवता पाञ्चरात्रविभजनम् )

सदागममयात्तस्मात्केवलाद्दिव्यशासनात् ॥६२॥
निर्ममे सारमुद्धृत्य स्वयं विष्णुरसंकुलम् ।
तत्परव्यूहविभवस्वभावादिनिरूपणम् ॥६३॥
पाञ्चरात्राह्वयं तन्त्रं मोक्षैकफललक्षणम् ।
सुदर्शनाह्वयो योऽसौ संकल्पो वैष्णवः परः ॥६४॥

---

1. वात्स्यायनः B C D.

स स्वयं बिभिदे तेन पञ्चधा पञ्चवक्त्रगः[1]।

(अध्यायार्थनिगमनम्)

विष्णुसंकल्परूपोऽयं प्रमाणव्यूह ईरितः।
शस्त्रशास्त्रविभेदेन किं भूयः श्रोतुमिच्छसि ॥६५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
शब्दात्मकप्रमाणव्यूहनिरूपणं नामैकादशोऽध्यायः।

ओम्।

(आदितः श्लोकाः ६८२)

---

1. वक्त्रशः E.

ओम् ।

# अथ शब्दात्मकप्रमाणव्यूहविशेषस्वरूपनिरूपणं नाम द्वादशोऽध्यायः ।

(तत्र प्रथमं वृत्तानुवादः)

श्रीनारदः ।

सुरासुरगणाराध्य[1] नमस्ते पार्वतीप्रिय ।
त्वत्प्रसादाच्छ्रुतं देव दिव्यं तद्वैष्णवं यशः ॥१॥
यत्तदाद्यं महच्छास्त्रं सुदर्शनमयं हरेः ।
तस्मात्पृथक्पृथक्छास्त्रमाहुर्वाच्यायनादयः ॥२॥

(त्रय्यादिस्वरूपप्रश्नः)

त्रयी सांख्यं तथा योगशास्त्रं पाशुपतं तथा ।
सात्वतं चेति तद्रूपं श्रोतुमिच्छाम्यहं प्रभो[2] ॥३॥

(तत्प्रतिवचनप्रतिज्ञा)

अहिर्बुध्न्यः ।

शृणु नारद तत्त्वेन तेषां रूपं पृथक्पृथक् ।
संकल्पो यावता विष्णोर्भेदेन व्यवतिष्ठते ॥४॥

---

1. महाध्यक्ष A B C E F.
2. पृथक् D.

(त्रयीस्वरूपनिरूपणम्)

तत्र त्रयीमयं शास्त्रमाद्यं सर्वार्थदर्शनम्।
ऋग्यजुःसामरूपत्वात्त्रयी सा परिकीर्तिता ॥५॥
कार्यभेदात्त्रयीत्वेऽपि चतुर्धा सा प्रकीर्तिता।
ऋचो यजूंषि सामानि ह्यथर्वाङ्गिरसस्तथा ॥६॥
चातुर्होत्रप्रधानत्वादृगादित्रितयं त्रयी।

(अथर्वणां पृथक्करणे हेतुः)

अथर्वाङ्गिरसां रूपं सर्वमृग्यजु[illegible] ॥७॥
तथापि शान्त्याभिचारप्राधान्यात्ते पृथक्कृताः।

(ऋगादीनां शाखासंख्या)

[illegible]कविंशतिशाखावानृग्वेदः [illegible] ॥८॥
शतं चैका च शाखाः स्युर्यजुषामेकवर्त्मनाम्।
साम्नां शाखाः सहस्रं स्युः पञ्च शाखा अथर्वणा[illegible] ॥[illegible]॥

(इयतामेव वेदानां प्रत्यक्षत्वम्)

इयन्त एव प्रत्यक्षा आम्नायन्ते महर्षिभिः।
स्मर्यन्ते मुनिभिर्नित्यं लब्धानुज्ञैर्महेश्वरात् ॥१०॥
एषां नैयमिका धर्माः स्वरूपाम्नायगोचराः।

(कल्पादीनि षडङ्गानि)

कल्पो व्याकरणं शिक्षा निरुक्तं ज्योतिषां गतिः॥
छन्दसां विचयश्चेति षडङ्गानि विदुर्बुधाः।

---

1. रूपमाद्यम् A B C E F.

(मीमांसा न्यायश्चोपाङ्गम्)

[1]उपाङ्गद्वितयं चैतन्मीमांसा न्यायविस्तरः ॥१२॥
धर्मज्ञसमयोऽर्थाश्च वेदवादोत्थितास्तथा ।
निबद्धा चानिबद्धा च संस्काराचारसंततिः ॥
धर्मशास्त्रं महर्षीणामन्तःकरणसंभृतम् ।

(उपवेदादिकम्)

इतिहासपुराणाख्य उपवेदः प्रकीर्तितः ॥१४॥
वास्तुवेदो धनुर्वेदो गान्धर्वश्च तथा मुने ।
आयुर्वेदश्च पञ्चैत उपवेदाः प्रकीर्तिताः ॥१५॥
दण्डनीतिश्च वार्ता च विद्याद्वयमिदं परम् ।
एकविंशतिभेदो यः सप्रकारः प्रकीर्तितः ॥१६॥
वाच्यायनादृषेः पूर्वं विष्णोर्वाणीसमुद्भवात् ।
त्रयीरूपेण संकल्प इयद्भेदो विजृम्भितः ॥१७॥

(अथ सांख्यस्वरूपवर्णनम्)

सांख्यरूपेण संकल्पो वैष्णवः कपिलादृषेः ।
उदितो यादृशः पूर्वं तादृशं शृणु मेऽखिलम् ॥
षष्टिभेदं स्मृतं तन्त्रं सांख्यं नाम महामुने ।
प्राकृतं वैकृतं चेति मण्डले द्वे समासतः ॥१९॥

(तत्र प्राकृतमण्डलवर्णनम्)

प्राकृतं मण्डलं तत्र द्वात्रिंशद्भेदमिष्यते ।
तत्राद्यं ब्रह्मतन्त्रं तु द्वितीयं पुरुषाङ्कितम् ॥२०॥

1. उपाङ्गं तन्मयं चैव A B C E F.

त्रीणि तन्त्राण्यथान्यानि शक्तेर्नियतिकालयोः[1] ।
गुणतन्त्राण्यथ त्रीणि तन्त्रमक्षरपूर्वकम् ॥२१॥
प्राणतन्त्रमथान्यत्तु कर्तृतन्त्रमथेतरत् ।
[2]स्वामितन्त्रमथान्यत्तु ज्ञानतन्त्राणि पञ्च च ॥२२॥
क्रियातन्त्राणि पञ्चाथ मात्रातन्त्राणि पञ्च च ।
भूततन्त्राणि पञ्चेति त्रिंशद्वै च भिदा इमाः ॥२३॥
प्राकृतं मण्डलं प्रोक्तं वैकृतं मण्डलं शृणु ।

(अथ वैकृतमण्डलवर्णनम्)

अष्टाविंशतिभेदं तन्मण्डलं वैकृतं स्मृतम् ॥२४॥
कृत्यकाण्डानि पञ्चादौ भोगकाण्डं तथाऽपरम् ।
[3]वृत्तकाण्डं तथैकं तु क्लेशकाण्डानि पञ्च च ॥२५॥
त्रीणि प्रमाणकाण्डानि ख्यातिकाण्डमतः परम् ।
धर्मकाण्डमथैकं च काण्डं वैराग्यपूर्वकम् ॥२६॥
अथैश्वर्यस्य काण्डं च गुणकाण्डमतः परम् ।
लिङ्गकाण्डमथैकं च दृष्टिकाण्डमतः परम् ॥२७॥
आनुश्रविककाण्डं च दुःखकाण्डमतः परम् ।
सिद्धिकाण्डमथैकं च काण्डं काषायवाचकम्[4] ॥
तथा समयकाण्डं च मोक्षकाण्डमतः परम् ।
अष्टाविंशतिभेदं तदित्थं विकृतिमण्डलम् ॥२९॥

---

1. शक्तेः पुरुषकालयोः इति D व्यतिरिक्तेषु.
2. अयमेव पाठः.  3. वृत्तिकाण्डमथैकं तु D.
4. वाचनम् D.

षष्टितन्त्राण्यथैकैकमेषां नानाविधं मुने ।
षष्टितन्त्रमिदं सांख्यं सुदर्शनमयं हरेः ॥३०॥
आविर्बभूव सर्वज्ञात्परमर्षेर्महामुने ।

(अथ योगशास्त्रस्वरूपवर्णनम् )

विष्णुसंकल्परूपं च महद्योगानुशासनम् ॥३१॥
हिरण्यगर्भादुद्भूतं तस्य भेदानिमाञ्शृणु ।

(तत्र संहिताद्वयम् )

आदौ हिरण्यगर्भेण द्वे प्रोक्ते योगसंहिते ॥३२॥
एका निरोधयोगाख्या कर्मयोगाह्वयाऽपरा ।

(निरोधसंहिताया द्वादशविधत्वम् )

संहिता तु निरोधाख्या तत्र द्वादशधा स्मृता ॥
अङ्गतन्त्रमथाद्यं तु दोषतन्त्रमतः परम् ।
उपसर्गाभिधं तन्त्रं तथाऽधिष्ठानकं परम् ॥३४॥
आधारतन्त्रं योगं च बहिस्तत्त्वाधिकारवत् ।
रिक्तयोगाख्यतन्त्रं च पूर्णयोगाख्यमेव च ॥३५॥
सिद्धियोगाख्यया त्रीणि मोक्षतन्त्रमतः परम् ।
इति द्वादशभेदास्ते निरोधायाः प्रकीर्तिताः ॥३६॥

(कर्मसंहितायाश्चातुर्विध्यम् )

ब्रह्मणा गदितास्तत्र चतस्रः कर्मसंहिताः ।
नानाकर्ममयी त्वेका परा त्वेका क्रियामयी ॥३७॥

---

1. योगाभिधा B.

बाह्याभ्यन्तररूपेण द्वे अपि द्विविधे स्मृते ।
योगानुशासनं शास्त्रमिति षोडशविस्तरम् ॥३८॥
सुदर्शनमयं विष्णोरुदितं तत्प्रजापतेः ।

(अथ पाशुपतस्वरूपवर्णनम्)

तन्त्रं पाशुपतं नाम पशुपाशप्रमोचनम्[1] ॥३९॥
मद्वक्त्रान्निःसृतं विष्णोः संकल्पप्रविजृम्भितम् ।

(तस्याष्टकाण्डत्वम्)

[2]अष्टकाण्डमिदं प्रोक्तं मया तन्त्रमनुत्तमम् ॥४०॥
पतिकाण्डमथाद्यं तु पशुकाण्डमतः परम् ।
पाशकाण्डं तृतीयं तु प्रोक्तं पञ्चप्रभेदतः ॥४१॥
शुद्धचर्या च मिश्रा च काण्डे द्वे परिकीर्तिते ।
दे[3]वकांडमथो षष्ठं दीक्षाकाण्डमतः परम् ॥४२॥
सायुज्यमष्टमं प्रोक्तं काण्डं पाशुपतं महत् ।
अष्टकाण्डमिदं शास्त्रं सुदर्शनमयं हरेः ॥४३॥
दिव्यं पाशुपतं शास्त्रं म[4]यैवोक्तं महामुने ।

(अथ पाञ्चरात्रस्वरूपवर्णनम्)

यत्तत्सौ· र्शनं विष्णोः सात्वतं नाम जृम्भितम् ॥

---

1. विमोचनम् B C.
2. अष्टतन्त्र° D.
3. देश° D.
4. मत्तो व्यक्तं D.

भेदो दशविधस्तस्य संक्षेपेण प्रकीर्तितः ।
भगवत्संहिता त्वाद्या तथाऽन्या कर्मसंहिता ॥
विद्यामयी तृतीया च चतुर्थी कालसंहिता ।
कर्तव्यसंहिता त्वन्या षष्ठी वैशेषिकी क्रिया ॥४६॥
सप्तमी गदिता तत्र पूज्या सं[1]यमसंहिता ।
अष्टम्यधिकृते चिन्ता नवमी मार्गसंहिता ॥४७॥
सात्व[2]ती गीयते शुद्धा दशमी मोक्षसंहिता ।
एतावत्सात्वतं शास्त्रमाविरासीत्सनातना[3]त् ॥४८॥
एतानि पञ्च शास्त्राणि मूलभूतानि वै मुने ।
युगे युगे विभ[4]ज्यन्ते विष्णुसंकल्पचोदितैः ॥४९॥
तत्तत्कर्तृसमाख्यातास्तास्तास्त्रय्यादिसंहिताः ।
प्रादेशिक्यो निवर्तन्ते [5]ह्रासकालानुकालतः ॥५०॥

(शास्त्राभासप्रवृत्तौ कारणम्)

हिंस्राणां मोहनार्थाय संकल्पा एव वैष्णवाः ।
शास्त्राभासाः प्रवर्तन्ते दे[6]वब्रह्मर्षिवक्त्रतः ॥५१॥

---

1. संशय° A B C E F.
2. सात्त्वतैर्गीयते D.
3. सनातनम् D.
4. विचिन्त्यन्ते A B C E F.
5. त्रास° D.
6. देवर्षिब्रह्म A B C E F.

(उक्तार्थनिगमनम्)

एष प्राणमयो व्यूहो दिव्यः सौदर्शनः परः ।
शब्दार्थप्रविभागेन गदितस्ते मया मुने ॥५२॥

(सुदर्शनपर्यायशब्दाः)

प्राणो माया क्रिया शक्तिर्भाव उन्मेष उद्यमः ।
सुदर्शनं च संकल्पः शब्दाः पर्यायवाचकाः ॥५३॥

(पञ्चानामपि शास्त्राणां भगवति निष्ठा)

निष्ठा त्वेकैव शास्त्राणामेतेषां पञ्चवर्त्मनाम् ।
शास्त्रं सुदर्शनं नाम तदर्थो विष्णुरव्ययः ॥५४॥
प्रमाणमय उद्दिष्टो लेशतोऽयं महामुने ।
व्यूहः सौदर्शनो विष्णोः किं भूयः श्रोतुमिच्छसि ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
शब्दात्मकप्रमाणव्यूहविशेषस्वरूपनिरूपणं नाम द्वादशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ७३८)

---

1. प्रमाणयोर्व्यूहो A B C.

ओम् ।

## अथ प्रमाणार्थनिरूपणं नाम त्रयोदशोऽध्यायः ।

(प्रमाणार्थविषयकः प्रश्नः)

श्रीनारदः ।

नमस्ते देवदेवेश नमस्ते मरुतां पते[1] ।
भवानीपतये तुभ्यं नमस्ते वृषकेतन ॥१॥
त्वद्वक्त्रकमलोद्भूता अर्था अवधृता मया ।
यत्कारणं च जगतामाधारो जगतां च यः ॥२॥
जगतां यत्प्रमाणं च त्रयं तदवधारितम् ।
प्रमाणार्थमिदानीं मे वक्तुमर्हसि शंकर ॥३॥
यश्च यादृक्च यावांश्च प्रमाणस्यार्थ इष्यते ।

(तत्प्रतिवचनप्रतिज्ञा)

अहिर्बुध्न्यः ।

शृणु नारद तत्त्वेन प्रमाणस्यार्थमुत्तमम्[2] ॥४॥

1. पितः D.
2. उत्थितम् E F; अर्थितम् A B C.

विष्णुसंकल्पमूलो यो बहुधा[1] प्रविजृम्भते ।

(प्रमाणशब्दनिर्वचनम् )

मितिर्मा गदिता सद्भिः प्रकृष्टा मा प्रमा स्मृता ॥
प्रकर्षश्च मितेः सोऽयं यद्यथार्थावधारणम्[2] ।
धीसाधकतमं यत्तत्प्रमाणमिति शब्द्यते ॥६॥

(प्रमाणार्थस्वरूपम् )

प्रमाणेनार्थ्यते यद्धि स प्रमाणार्थ उच्यते ।
यत्पुंसो हितमत्यन्तं सर्वदेशेषु सर्वदा ॥७॥
स प्रमाणार्थ इष्टोऽत्र

(तस्य द्वैविध्यम् )

स द्वेधा व्यवतिष्ठते ।
हितं च साधनं चेति तयोस्तत्त्वमिदं शृणु ॥८॥

(तत्र हितस्वरूपम् )

आत्यन्तिकी निवृत्तिस्तु पुंसो या दुःखसंततेः ।
तयोपलक्षितं नित्यं सुखं यत्तद्धितं स्मृतम् ॥९॥

(साधनस्वरूपम् )

तस्य योऽव्यभिचारेण साधनत्वं प्रपद्यते ।
हितसाधनमित्युक्तः सोऽर्थो वेदान्तपारगैः ॥१०॥

(हितस्वरूपयाथात्म्यम् )

स्वरूपभूतं यत्पुंसो हितं सुखमुदीरितम् ।

1. बहुप्रेम्णि विजृम्भते A B C.
2. यद्धितार्थावधारणमिति सर्वत्र.

भगवन्मयता साऽस्य भगवत्ताऽपराह्वया ॥११॥

(साधनद्वैविध्यम्)

अत्यन्तसाधनं तस्य यत्तद्द्वेधा व्यवस्थितम् ।
विधा ज्ञानमिति त्वेका धर्म[1] इत्यपरा विधा ॥१२॥

(तयोर्हेतुहेतुमद्भावः)

हेतुमद्धेतुभावस्तु विधयोरनयोः स्मृतः ।

(ज्ञानद्वैविध्यम्)

ज्ञानं तु हेतुमत्तत्र तच्च द्वेधा व्यवस्थितम् ॥१३॥
साक्षात्कारमयं चैकं[2] परोक्षं परमीर्यते ।

(तयोरपि हेतुहेतुमद्भावः)

हेतुमद्धेतुभावोऽयं द्वयोरपि निरूप्यते ॥१४॥
हेतुमत्त्वपरोक्षं यत्परोक्षं हेतुरुच्यते ।

(कर्मणां ज्ञानहेतुत्वम्)

अनयोर्ज्ञानयोर्धर्मः स हेतुरिति गीयते ॥१५॥
साक्षात्परोक्षे तत्साध्ये हेतुस्तन्मुखतो ह्यसौ ।

(कर्मणां द्वैराश्यम्)

अस्यापि द्वे विधे दृष्टे[3] तत्त्वशास्त्राब्धिपारगैः ॥१६॥
साक्षादाराधनात्मैकः परस्तु व्यवधानतः ।

---

1. अपरा धर्म इत्यपि A B C E F.
2. त्वेकम् D F.
3. शिष्टे D.

(तत्र व्यवहितकर्मस्वरूपम्)

[1]अपारं तत्परं ब्रह्म शक्तिमत्परमेश्वरम् ॥१७॥
नारायणसमाख्यातं नित्यं षाड्गुण्यमव्ययम् ।
विभूतयस्तु तस्येमे ब्रह्माद्याः स्थावरान्तिमाः ॥१८॥
[2]भावनात्रयसंमिश्रास्तत्सुदर्शनजृम्भिताः ।
या सा भूतिः पुरा शक्तेः कोट्यंशेनोदिता मया ॥
तदंशलेशाद्ब्रह्माद्या विष्णुसंकल्पजृम्भिताः ।
एतद्विभूतिमुखतो यो ह्यकामहतैर्नरैः ॥२०॥
ब्रह्मार्पणेन क्रियते स धर्मो व्यवधानवान् ।

(अव्यवहितधर्मस्वरूपम्)

विभूतिमत्परं ब्रह्म तदेवाव्यवधानतः ॥२१॥
येन प्रीणयते योगी स साक्षाद्धर्म इष्यते ।

(पाञ्चरात्रस्याव्यवहितधर्मपरत्वम्)

सात्त्वतं शासनं सर्वं तस्यैतस्यावबोधकम् ॥२२॥

(साशिरस्कस्य वेदस्य व्यवहितधर्मपरत्वम्)

यस्तु पूर्वस्त्रयीभागः परभागार्थतां गतः ।
अपरस्य स धर्मस्य निष्कामानां निरूपकः ॥२३॥

(पाशुपतस्यैकविभूतिविषयकधर्मपरत्वम्)

धर्म एकविभूतिस्थो मया पाशुपते स्मृतः ।
उग्रव्रतैर्नरैः शश्वद्ब्रह्मप्रीत्यै स साध्यते ॥२४॥

---

1. अन्तरङ्गं परं ब्रह्म D.
2. भावनात्रयमिश्रास्तत्सुदर्शनविजृम्भिताः A B C E F.

(सांख्यस्य परोक्षज्ञानफलकत्वम्)

साक्षाच्च व्यवधानाच्च यत्तन्मोक्षस्य साधनम् ।
परोक्षं तत्प्रसंख्यानं ज्ञानं सांख्येन चिन्त्यते ॥

(वेदान्तानामपरोक्षज्ञानफलकत्वम्)

अन्तरङ्ग[1]शमाद्यङ्गभक्तिश्रद्धापुरःसरम् ।
त्रय्यन्तैर्ब्रह्मविज्ञानमपरोक्षं विभाव्यते[2] ॥२६॥

(योगस्यापरोक्षज्ञानाङ्गयमादिपरत्वम्)

बहिरङ्गान्तरङ्गाख्ययमाद्यङ्गकलापवान् ।
चित्तवृत्तिनिरोधात्मा योगो योगानुशासने ॥२७॥
शश्वदभ्यासवैराग्यपरेशप्रणिधानतः ।
साक्षात्कारावभासाख्यसिद्धशु[illegible]दः ॥२८॥

(गुणप्रधानभावेन सर्वत्र सर्वोपदेशः)

यशो[illegible]विज्ञानं नानाहेतुविधान्वितम् ।
धर्मो बहुविधश्चेति [3]सर्वं सर्वैर्निरूप्यते ॥२९॥

(शास्त्रेषु विविधफलान्तरसाधनान्तरोपदेशस्याभिप्रायकथनम्)

हितप्रवृत्तेर्लोकानां तनूकाराय पाप्मनाम् ।
रागद्वेष[4]प्रयुक्ताना[illegible]युर्वेदोपदेशवत् ॥३०॥

---

1. शमाद्यं वै A B C E F.
2. परोक्षं तद्विभाव्यते A B C.
3. सर्वैरत्र निरूप्यते A B C E F.
4. प्रवृत्तानाम् D.

नानारूपफलावाप्त्यै नानानियमभेदिताः ।
शास्त्रैर्धर्मा विधीयन्ते नानारूपा धियस्तथा ॥३१॥

(अथ लौकिकपुरुषार्थद्वयोपक्षेपः)

तदित्थं स[1]विशेषं ते पुमर्थद्वयमीरितम् ।
अथान्यल्लौकिकैः[2] शास्त्रैः पुमर्थद्वयमीरितम् ॥३२॥
अर्थकामौ

(अर्थकामस्वरूपवर्णनम्)

तयोः कामः स्मृतो वैषयिकेरितः ।
अर्थो गोभूहिरण्यादिप्रेक्षोत्थानफलात्मकः ॥३३॥

(त्रिवर्गस्य मिथः साध्यसाधनभावविवेकः)

अर्थो धर्मस्य कामस्य तथाऽर्थस्यापि साधनम् ।
[3]धर्मो धर्मस्य कामस्य तथाऽर्थस्यापि साधनम् ॥
[3]कामो धर्मस्य कामस्य तथाऽर्थस्यापि साधनम् ।
अर्थः कामश्च सर्वत्र व्यभिचारेण साधनम् ॥
धर्मः सर्वस्य साध्यस्य नियमेनैव साधनम् ।
तदेतत्त्रितयं प्रोक्तं त्रिवर्ग इति पण्डितैः ॥३४॥

(मोक्षस्य सर्वदा साध्यत्वमेव)

मोक्षश्च साध्य एवेति पुरुषार्थचतुष्टयम् ।

---

1. भव्यशेषम् A B C F; हव्यशेषम् E.
2. लौकिकं D.
3. इदमर्धद्वयं D व्यतिरिक्तपुस्तकेषु भ्रान्त्या त्यक्तम्.

(अर्थकामयोः प्रमाणनिरूपणम् )

दण्डनीतिः सवार्ता सा सोपवेदचतुष्टया ॥३७॥
प्रमाणत्वेन निर्दिष्टा पण्डितैरर्थकामयोः ।

(इतिहासादेस्तत्त्वज्ञानसहकारित्वम् )

इतिहासपुराणाख्य उपवेदो हि यः स्मृतः ॥३८॥
सहायभावं शास्त्राणां तत्त्वज्ञाने व्रजत्यसौ ।
इति ते लेशतः प्रोक्ता पुरुषार्थचतुष्टयी ॥३९॥

(धर्मादीनामन्तरङ्गसाधनानि)

अन्तरङ्गममुष्यास्तु साधनं शृणु नारद ।
निर्व्याजा निरुपस्कारा दया धर्मस्य साधनम् ॥
हेतुरुत्थानमर्थस्य देशकालोपपादितम् ।
हेतुः कामस्य संकल्पो निर्व्याजो निरुपस्कृतः ॥
हेतुस्तु सर्वसंन्यासो मोक्षे ज्ञानपुरस्कृतः ।

(तेषामेव बहिःसाधनानि)

न्याय्यं धर्मादि धर्मस्य बहिःसाधनमुच्यते ॥४२॥
[1]बहिःसाधनमर्थस्य तन्त्रावापादिचिन्तनम् ।
कामे पाणिग्रहाद्युक्तं बहिरङ्गं विचक्षणैः ॥४३॥
निष्काम धर्मकृत्यादि बहिर्मोक्षस्य साधनम् ।
विजृम्भितमिदं भूतैः पुरुषार्थचतुष्टयम् ॥४४॥
संकल्पो वैष्णवस्तस्य विजृम्भाहेतुरुच्यते ।

---

1. अर्थसाधन० A B C E F.

(अध्यायार्थोपसंहारः)

**इति ते सकला प्रोक्ता प्रमाणार्थगतिः परा ।**
**ससाधना सप्रकारा किं भूयः श्रोतुमिच्छसि ॥४५॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम्

प्रमाणार्थनिरूपणं नाम त्रयोदशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ७८३)

---

ओम् ।

## अथ जीवस्य संसारहेतु[illegible]णप्रकारवर्णनं नाम चतुर्दशोऽध्यायः ।

(तत्रादौ मुक्तिविषयः पुनःप्रश्नः)

श्रीनारदः ।

अज्ञानतिमिरप्लोषि[illegible]नयनत्विषे ।
नमस्ते त्रिपुराराते नमस्तेऽन्तकविद्विषे ॥ १ ॥
पुरुषार्थाः श्रुताः सर्वे मुख्यगौणविकल्पिताः[1] ।
पुरुषार्थः श्रुतो मुख्यस्तत्र मुक्त्यभिसंज्ञितः ॥ २ ॥
भगवत्तामयी प्रोक्ता [2]मुक्तिश्च त्रिपुरद्विषा ।
तस्याश्च साधनं साक्षात्तत्त्वज्ञानं द्विधा स्थितम् ॥
साधनं तस्य च प्रोक्तो धर्मो निरभिसंधिकः ।
भूयो विस्तरतः शंस मुक्तिं तां चन्द्रशेखर ॥ ४ ॥
[3]यतो यस्य च या मुक्तिस्त[illegible] मे द्वितयं वद ।
नह्यन्यं प्रष्टुमर्हामि त्वामृते सर्ववेदिनम् ॥ ५ ॥

---

1. विकल्पतः E F.
2. मुक्तिश्च त्रिपुरद्विषे D ; मुक्तिस्त्रिपुरविद्विषा B C E F.
3. तयोर्यस्य च सा A B C E F.

(जीवस्वरूपसंक्षेपः)

अहिर्बुध्न्यः ।

अनादिरपरिच्छेद्यश्चिदानन्दमयः पुमान् ।
भगवन्मय एवायं भगवद्भावितः सदा ॥ ६ ॥

(जीवस्य भगवच्छक्त्यंशलेशत्वम् )

या सा शक्तिर्महासत्ता विष्णोस्तद्धर्मधर्मिणी ।
तस्याः कोट्यर्बुदांशेन शक्ती द्वे कथिते तव ॥ ७ ॥
भूतिश्चेति क्रिया चेति भाव्यभावकसंज्ञिते ।
भूतिः सा क्रियया ज्वाला मरुतेव [1]प्रणर्त्यते ॥ ८ ॥
नानाभेदवती भूतेर्विभूतिः कथिता पुरा ।
शुद्ध्यशुद्धिवशाद्द्वेधा शुद्धा सा बहुधोदिता ॥९॥
पुंशक्तिः कालमय्यन्या पुमान्सोऽयमुदीरितः ।

(तस्य कालवश्यत्वात्संसारप्राप्तिः)

कालशक्तिविकारस्थः सोऽयं संसरति ध्रुवम् ॥१०॥

(साधननिष्पत्त्या स्वरूपाविर्भावः)

[2]सोऽयं शास्त्रीयमासाद्य मार्गं स्वेनाभिजायते ।

(तत्र पुनःप्रश्नः)

श्रीनारदः ।

भगवन्देवदेवेश त्रिपुरान्तक शंकर ॥११॥

---

1. प्रवर्तते A B C E F.
2. इदमारभ्य सार्धश्लोकः D पुस्तके भ्रान्त्या त्यक्तः

कालशक्तिविकारस्थः कथं संसरति ध्रुवम् ।
कथं वोपायमासाद्य पुमान्स्वेनाभिजायते[1] ॥१२॥

(भगवत्स्वातन्त्र्यस्यापर्यनुयोज्यत्वम्)

अहिर्बुध्न्यः ।

सर्वैरननुयोज्यं तत्स्वातन्त्र्यं दिव्यमीशितुः ।
अवाप्तविश्वकामोऽपि क्रीडते राजवद्वशी ॥१३॥

(भगवत्संकल्पस्य पञ्चधा विभागः)

संकल्पो नाम यस्तस्य सुदर्शनसमाह्वयः ।
सत्यप्यनन्तरूपत्वे पञ्चधा स[2] विजृम्भते ॥१४॥
सृष्टिस्थित्यन्तकारेण निग्रहानुग्रहात्मना ।

(निग्रहशक्त्या जीवस्याकारादितिरोधानम्)

तिरोधानकरी शक्तिः सा निग्रहसमाह्वया ॥१५॥
पुमांसं जीवसंज्ञं सा तिरोभावयति स्वयम् ।
आकारैश्वर्यविज्ञानतिरोभावनकर्मणा ॥१६॥

(तिरोधायकपर्यायशब्दाः)

मायाऽविद्या महामोहो महातामिस्रमित्यपि ।
तमो बन्धोऽथ हृद्ग्रन्थिरिति पर्यायवाचकाः ॥१७॥

(जीवाणुत्वादि)

आकारस्य तिरोधानादणुत्वं[3] पुंस इष्यते ।
ऐश्वर्यस्य तिरोभावादकिंचित्कता स्मृता ॥१८॥

---

1. स्वेनोपजायते D.
2. प्रविजृम्भते A B C E F.
3. तिरोभावादणुत्वं A B C E F.

पुंसो [illegible]कोचादज्ञत्वं समुदाहृतम् ।
तिरोहित[1]ः पुमाञ्छक्त्या विष्णु[illegible] ॥१९॥
अणुः किंचित्करश्चेति किंचिज्ज्ञश्चेति कथ्यते ।

(अणुत्वादेर्मलत्वं बन्धत्वं च)

मलत्रयमिदं प्रोक्तं बन्धत्रयमिदं बुधैः ॥२०॥

(अविद्यादिभिर्मलविवृद्धिः)

तिरोभावनश[illegible]थैवं वैष्णव्या बन्धमेयुषः ।
अविद्याऽस्मित्वरागाद्या मलं समुपचिन्व[illegible] ॥२१॥

(इष्टानिष्टप्राप्तिपरिहारेच्छा)

क्लिश्यद्भिः क्लेशितः[2] क्लेशैरविद्यादिभिरीदृशैः ।
नुन्नः प्रेप्साजिहासाभ्यामागमाननुसंपतन् ॥२२॥
इष्टार्थप्राप्तयेऽनिष्टविघाताय च लालसः ।
[3]कर्मतत्कुरुते कामी शुभाशुभफलोदयम् ॥२३॥

(कर्मवशाज्जात्यायुर्भोगप्राप्तिः)

ततः कर्मविपाकस्थः शुभाशुभविमिश्रितान् ।
जात्यायुर[4]नुबन्धान्स प्राप्नोति विधिचोदितः॥२४॥
सुखादिवासनास्तास्ताः संचिनोति शनैः शनैः ।
एषा निग्रहशक्तेस्तु तिरो[5]धानपरंपरा ॥२५॥

---

1. तिरोभूतः A D E F.
2. क्लेशितक्लेशैः A B C.
3. कर्मतः D.
4. उपबन्धान् A B C.
5. तिरोभाव° A B C E F.

(तिरोधाने सहकारिकारणम्)

अंशौ यौ कालशक्त्याख्यौ भूतेः समनुवर्तितौ[1] ।
ताभ्यां पुंसस्तिरोभावं तनुते निग्रहात्मिका ॥२६॥

(सृष्ट्यादीनां संचितकर्ममूलकत्वम्)

[2]बन्धस्य त्वनया शक्त्या तिस्रः सृष्ट्यादिशक्तयः ।
संचितैः संप्रवर्तन्ते तैस्तैः कर्मभिरूर्जितैः ॥२७॥

(सहेतुकस्य बन्धस्यानादित्वम्)

बन्धोऽनादिरयं प्रोक्तो बन्धहेतुश्च नादिमान् ।

(बद्धजीवे भगवत्कृपाविर्भावः)

एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ॥२८॥
जीवे दुःखाकुले विष्णोः [3]कृपा काऽप्युपजायते ।

(कृपाया अनुग्रहशक्तिपाकरूपत्वम्)

[4]याह्युक्ता पञ्चमी शक्तिर्विष्णुसंकल्परूपिणी ॥२९॥
अनुग्रहात्मिका शक्तिः सा कृपा वैष्णवी परा ।
शक्तिपाकः स वै विष्णोरागमस्थैर्निगद्यते ॥३०॥

(कृपाविषयस्य जीवस्य कर्मसाम्यप्राप्तिः)

अनुग्रहात्मना शक्त्या सुदर्शनमयात्मना ।
स्वीकृतो हि यदा विष्णोः करुणावर्षरूपया ॥३१॥

---

1. पश्यतौ A B C E E.
2. अजस्य B C.
3. करुणा कापि जायते A B C E F.
4. इदमारभ्य सार्धश्लोकद्वयं A B C E F; पुस्तकेषु न दृश्यते.

समीक्षितस्तदा सोऽयं करुणावर्षरूपया ।
कर्मसाम्यं भजत्येव जीवो विष्णुसमीक्षितः ॥३२॥
[1]शक्तिपाकः स वै जीवमुत्तारयति संसृतेः ।
कर्मणी च समे तत्र तूष्णींभावमुपागते ॥३३॥

(सदृष्टान्तं कर्मणामुदासितृत्वोपपादनम्)

यथा हि मोषकाः पान्थे परिबर्हमुपेयुषि ।
निवृत्तमोषणोद्योगाः [2]समाः सन्त उदासते ॥३४॥
अनुग्रहात्मिकायास्तु शक्तेः पातक्षणे तथा ।
उदासाते समीभूय कर्मणी ते शुभाशुभे ॥३५॥

(मुमुक्षोर्मोक्षोपायप्राप्तिप्रकारः)

तत्पातानन्तरं जन्तुर्युक्तो मोक्षसमीक्षया ।
प्रवर्तमानवैराग्यो विवेके[3]ऽभिनिवेशवान् ॥३६॥
आगमाननुसंचिन्त्य गुरूनप्यु[4]पसद्य च ।
[5]लब्धसत्त्वप्रकारैस्तैः प्रबुद्धो बोधपालनः ॥३७॥
[6]अक्षिण्वन्गुरुसंबोधं क्षिण्वन्क्लेशादिकानपि ।
विचिन्वन्सर्वतः सारमुपचिन्वन्प[7]रां धियम् ॥३८॥

---

1. शक्तिभावः A B C E F.
2. सदा सन्त उपासते A B C E F.
3. विवेकाभि° A B C.
4. उपचर्य च A B C E F.
5. लब्धतत्त्वः D.
6. अक्षिण्वद्गुरुसंबोधः D.
7. धियं पराम् A B C E F.

सांख्ययोगसमावेशी सत्कर्मनिरतः स्वयम् ।
उग्रव्रतधरो[1] ज्ञानी वेदान्तज्ञाननिश्चलः[2] ॥३९॥
संहतैर्विगृहीतैश्च मार्गैरेभिः सुनिश्चयैः ।
क्लेशेन महता स्थानं वैष्णवं प्रतिपद्यते ॥४०॥

(लब्धज्ञानस्य मोक्षप्राप्तिः)

संप्राप्य ज्ञानभूयस्त्वं निर्मलीकृतचेतनः ।
अनाविलमसंक्लेशं वैष्णवं तद्विशेत्पदम् ॥४१॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
जीवस्य संसारहेतुतदुद्धरणप्रकारवर्णनं नाम चतुर्दशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ८२४)

1. उग्रवृत्त॰ E.
2. निश्चयः D.

ओम् ।

## अथाधिकारिनिरूपणं नाम पञ्चदशोऽध्यायः ।

श्रीः ।

[1]ध्यातो धृतात्मभिश्चक्रमध्यस्थो मधुसूदनः ।
पायादपायात्संसाररूपकूपात्तु नः परः ॥

ओम् ।

(अधिकारिविषयः प्रश्नः)

देवदेव नमस्तेऽस्तु वृषकेतन शंकर ।
त्वत्प्रसादाच्छ्रुतं दिव्यं रहस्यं [2]ज्ञानमुत्तमम् ॥१॥
प्रश्नशेषं मम ब्रूहि यत्पृष्टोऽसि मया पुरा ।
पुरुषार्था हि ये प्रोक्ताश्चत्वारः सकलाश्रयाः ॥२॥
के हि तानधिकुर्वन्ति तन्मे विस्तरतो वद ।

(तत्प्रतिवचने प्रथमं सात्त्विकरीतिप्रतिपादनम् )

अहिर्बुध्न्यः ।

ये हि ते मनवो नाम विद्यागर्भाः [illegible]रोदिताः ॥

1. श्लोकोऽयं D पुस्तके न दृश्यते.
2. ज्ञानमद्भुतम् E F.

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इति विभेदिताः।
मनवास्तत्प्रसूता ये तथा मानवमानवाः ॥४॥
मुखबाहूरुपादेभ्यो ब्राह्मणाद्याः समुत्थिताः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इत्यपि ते स्मृताः॥
द्वितये ते यथायोगमधिकुर्वन्ति तानिमान् ।

(मनुसन्ततिजानां पाञ्चरात्राधिकारः)

ये पुरा कथिताः पञ्च सिद्धान्ताः सर्वसंमताः ॥
मनुसन्ततिजास्तत्र सात्वतं त्वधिकुर्वते[1] ।

(तेषां तन्निष्ठया भगवत्प्राप्तिः)

त्रयोदशविधं कर्म गुणैः[2] सांयमिकैर्युतम् ॥७॥
कुर्वाणाः पञ्चकालस्थास्ते यान्ति पुरुषोत्तमम् ।

(तेषु त्रैवर्णिकानां चातुराश्रम्यम् )

विहितं चातुराश्रम्यं त्रयाणां[3] तत्र नारद ॥८॥
ब्रह्मचारी गृहस्थो वा वनस्थो भिक्षुरित्यपि ।

(तेषां शुश्रूषया शूद्रस्य भगवत्प्राप्तिः)

शूद्रः शुश्रूषया तेषां भगवत्कर्मसाधनात् ॥९॥
अरागरोषलोभः सञ्छनैर्याति हरेः पदम् ।

---

1. चाधिकुर्वते A B C.
2. गुणैः समधिकैर्युतम् B C.
3. त्रयाणां तदनन्तरम् C.

(अन्यतमाश्रमस्थानामपि तेषां मोक्षसिद्धिः)

[1]सद्ब्रह्मयाजिनस्ते वै शुद्धाः स्वाध्यायतत्पराः ॥१०॥
अनन्ययाजिनो विप्रा आसृष्टेरधिकारिणः ।
मातापितृभ्यां तरुणाः प्राग्बुद्धेः साधुपालिताः ॥
[2]आचार्यनयसंपन्नास्ते शुश्रूषणतत्पराः ।
सम्यक्सप्तपदार्थज्ञा नियमस्थाः समाहिताः ॥१२॥
प्रकृतिज्ञानसंपन्नाः प्रमादपरिवर्जिताः ।
त्यक्तकामाः सुधृतयः शुचयः संयतेन्द्रियाः ॥१३॥
सिद्धा नाम [3]महाभागाः समाप्तज्ञाननिश्चयाः ।
धिया समाप्तकर्माणश्चरणैरन्विताः शुभैः ॥१४॥
आसमाप्तेः समास्थाय चतुर्णामेकमाश्रमम् ।
पाञ्चकालिकमच्छिद्रं कुर्वाणाः शतवार्षिकम् ॥१५॥
विवेकजां परां प्राप्य कर्मणोऽन्ते [4]शुभां धियम् ।
प्रद्योतमानविज्ञाना निर्धूतप्राकृतोद्यमाः ॥१६॥
सहस्रार्चिषमीशानं लक्ष्मीपतिमनाविलम् ।
क्षेत्रज्ञं सर्वभूतानां वासुदेवं विशन्ति ते ॥१७॥

---

1. इदमारभ्यार्धचतुष्टयं D पुस्तके न दृश्यते.
2. सर्वेषु कोशेष्वयमेव पाठः; 'अथापि, आचारनयसंपन्नाः' इति साधु भवेत्.
3. महाभाग D.
4. धियं शुभाम् B C.

(गार्हस्थ्यस्याश्रमान्तरोपजीव्यत्वम्)

अग्निमान्बहुमात्रावानेकः कौटुम्ब आश्रमः ।
व्रतादिनिरताः शुद्धास्त्रयोऽन्येऽनग्नयः स्मृताः ॥
कौटुम्बमुपजीवन्ति ते त्रयो ह्यूर्ध्वरेतसः ।

(सात्त्विकरीतिनिगमनम्)

गदिता सात्त्विकी रीतिरिति ते लेशतो मुने ॥१९॥

(अथ त्रय्यादिरीतिकथनारम्भः)

एवं विस्तरतो मेऽद्य रीतिमन्यां निशामय ।

(मुखबाहूरुपज्जानां त्रय्याद्यधिकारः)

ये हि ब्रह्ममुखादिभ्यो वर्णाश्चत्वार उद्गताः ॥२०॥
ते [illegible]धिकुर्वन्ति त्रय्यादीनां चतुष्टयम् ।

(त्रयीनिष्ठानां फलसिद्धिः ; सांख्यादिनिष्ठानां क्रमात्पञ्चरात्रारोहणञ्च)

त्रयीस्था एव सिध्यन्ति सांख्यादिष्वपि च त्रिषु ॥
आरोहन्तीच्छया तेऽपि सात्वतं शासनं परम् ।

(पाशुपतनिष्ठानां त्रयीधर्माननुष्ठातृत्वम्)

प्राप्ताः पाशुपतं ये हि धर्मं ब्राह्मणपूर्वकाः ॥२२॥
न धर्ममनुतिष्ठन्ति त्रयीस्थं ते पुनर्मुने ।
पञ्चरात्रं प्रविश्यैव नान्यं धर्मं वितन्वते ॥२३॥

(सांख्यानां नैष्कर्म्यम्)

निष्कर्माणः स्मृताः सांख्याः प्रसंख्यानैकतत्पराः।

1. रीतिर्लेशतस्ते महामुने A.

(योगनिष्ठानां वैदिककर्मानुष्ठातृत्वम्)

नित्यनैमित्तिकैर्युक्तो योगी योगाङ्गवाञ्छया ॥२४॥
कुर्यादलब्धलाभाय लब्धवृद्ध्य एव च ।
ब्रह्मिष्ठो वैदिकं कर्म नित्यं नैमित्तिकं तथा ॥२५॥
त्रय्यादिमार्गगा रीतिर्निर्दिष्टा प्रदर्शिता ।

(अथ वर्णाश्रमतद्धर्माणां निरूपणम्)

वर्णाश्रमविभागं मे धर्मैः सह निशामय ॥२६॥

(चत्वारो वर्णाः)

वर्णाश्चत्वार उद्दिष्टा ब्राह्मणादिक्रमेण ये[1] ।

(आद्यानां त्रयाणामध्ययनं द्विजातित्वं च)

अधीयीरंस्त्रयो वर्णाः पूर्वे भूत्वा द्विजातयः ॥२७॥

(शूद्रस्य द्विजशुश्रूषैकजातित्वं च)

चतुर्थ एकजातिस्तां[2]ञ्छुश्रूषेतानहंकृतः ।

(याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव)

ब्राह्मणो नाम यो वर्ण आद्यो ब्रह्ममुखोद्गतः ॥
स त्रीनध्यापयेदेतान्ब्राह्मणादीननुक्रमात् ।
याजयेच्च यथाकामं वृत्त्यर्थमनसूयया ॥२९॥
त्रिभ्यश्च प्रतिगृह्णीयादेष वैशेषिको विधिः ।

(शस्त्रधारणादिकं क्षत्रियस्य)

शस्त्राणां धारणं नित्यं क्षत्रजातेर्विशेषणम् ॥३०॥

---

1. वै A B C E F.
2. त्रीन् E F.

क्षतत्राणं यथाशास्त्रं प्रजानां परिपालनम् ।

(कृष्यादिकं वैश्यस्य)

विशो वैशेषिकी वृत्तिः कृषिगोरक्षवाणिजम् ॥३१॥

(इज्याध्ययनदानं त्रयाणां तुल्यम्)

इज्याध्ययनदानं तु द्विजातीनामिदं समम् ।
नित्यं [1]धर्मार्थमेवैतत्तत्र हिंसादिवर्जनम् ॥३२॥

(शुश्रूषा शूद्रस्य धर्मो वृत्त्यर्था च)

शुश्रूषैव तु शूद्रस्य धर्मो वृत्त्यर्थमेव च ।

(ब्राह्मणतदितरशुश्रूषयोः श्रैष्ठ्यकानिष्ठ्ये)

श्रेष्ठा ब्राह्मणशूश्रूषा कनिष्ठे त्वपरे स्मृते ॥३३॥

(चतुर्णां सामान्यधर्माः)

अहिंसा सत्यमक्रोधः स्वदारनिरतिर्दया ।
चतुर्ष्वेतेषु धर्मोऽयं सामान्येन विधीयते ॥३४॥

(ब्राह्मणोत्तमक्षत्रिययोश्चातुराश्रम्यम्)

[2]ब्रह्मणश्चातुराश्रम्यं क्षत्रस्य तु कथंचन ।

(क्षत्रियवैश्ययोराद्यमाश्रमत्रयम्)

[3]त्रयं चाद्यं क्षत्रविशोर्नियतं धर्मलक्षणम् ॥३५॥

---

1. धर्मार्थ एवैतत् A B C E F.
2. ब्राह्मणे चातुराश्रम्यम् B C E F.
3. त्रय्याश्रम्यम् D; त्रयं त्वाद्यम् E F.

(त्रैवर्णिकानां प्रागुपनयनात्कामचारः)

आचार्यजन्मनः पूर्वमव्रतास्ते[1] द्विजातयः ।

(उपनयने द्वितीयं जन्म)

आचार्याज्जन्म सावित्र्यां द्वितीयं दिव्यमिष्यते ॥

(यज्ञदीक्षायां तृतीयम्)

ते[2] त्रयो यज्ञदीक्षायां जन्म प्राप्य तृतीयकम् ।

(तेषां स्वाध्यायनिष्ठानां देवतुल्यत्वम्)

[3]ब्राह्मणाः सवनस्थार्याः सवनान्ते यथाक्रमम् ॥
स्वाध्याये वर्तमानास्ते देवाः सर्वेऽपि ते त्रयः ।

(अथाश्रमधर्माः)

इति ते कथिता वर्णा आश्रमानपि मे शृणु ॥

(तत्र प्रथममुपकुर्वाणब्रह्मचारिधर्माः)

आचार्याज्जन्म संप्राप्य तदन्ते नियतं वसन्[4] ।
[5]तद्धर्मकारी तन्निष्ठस्तद्भक्तस्तत्परायणः ॥३९॥
तन्निवेदितसर्वार्थो भिक्षार्थी तत्कुलाद्बहिः ।
कर्मशेषेण चाचार्यादिच्छन्स्वाध्यायमत्वरः ॥४०॥

---

1. पूर्वमप्रजास्ते D.
2. त्रयोऽपि यज्ञदीक्षायाम् D.
3. ब्राह्मणाः सवनस्थास्ते सवनान्ते यथायथा D.
4. वसेत् A B C E F.
5. तत्कर्मकारी D.

उपासीत बहिः सन्ध्ये नित्य[1]स्नाय्यनसूयकः ।
कुर्वन्निन्द्रियसं[2]रोधं भूतानामनुकम्पकः ॥४१॥
वह्निं समिद्भिरिन्धान उभे सन्ध्ये समाहितः ।
धर्मज्ञसमयस्थं चाप्याचरन्नात्मनो व्रतम् ॥४२॥
उपकुर्वाणको नाम स्वाध्याये सिध्यति द्विजः ।

(समाप्तब्रह्मचर्यस्येच्छयाऽऽश्रमान्तरप्राप्तिः)

वेदस्नायी व्रतस्नायी गुरवे दक्षिणां ददत् ॥४३॥
प्राप्यानुज्ञां गुरोरिच्छेत् चतुर्णामेकमाश्रमम् ।

(अथ नैष्ठिकब्रह्मचारिधर्माः)

यदीच्छेद्ब्रह्मचर्यं स ब्रह्मचारी स्वमाश्रमम् ॥४४॥
आचार्यमेव सेवेत युक्त आदेहपातनात् ।
जिज्ञासुब्रह्मचारी स लभेत ज्ञानमुत्तमम् ॥४५॥
अन्यथा पुण्यलोपः स्यादिति वेदानुशासनम् ।

(अथ गृहस्थधर्माः)

अथ चेद्रोचयेत्कर्तुं गार्हस्थ्यं धर्ममुत्तमम् ॥४६॥
लब्धानुज्ञो गुरोः स्नात्वा संप्राप्य विधिवत्स्त्रियम्
तया सह चरेद्धर्मं नित्यं स्वाध्यायतत्परः ॥४७॥

---

1. नित्यं स्यादनसूयकः A B C E F.
2. संकोचम A B C E F.

श्राद्धकृत्सत्यवादी च नित्यं चैवातिथिप्रियः ।
संकोचिनीं चरन्[1]वृत्तिमनसूयुरलोलुपः ॥४८॥
स्नातकव्रतशाली च पञ्चयज्ञपरायणः ।

(गृहस्थस्यापि पाञ्चरात्रधर्मावश्यकता)

[2]पञ्चकालरतो नित्यं दयाक्षान्तिधृतिस्थितिः[3] ॥४९॥
अक्रोधसत्यह्रीविद्याशौचास्तेयदमस्थितः ।
अनायासो ह्यकृपणः शास्त्रीये मङ्गले रतः ॥५०॥
मनसा कर्मणा वापि यज्ञान्सर्वान्समाचरेत् ।

(निष्कामस्य गृहस्थस्यापि मोक्षप्राप्तिः)

अकामहतया बुद्ध्या त्यक्ताहंकारलोभया ॥५१॥
सत्तर्कव्यवसायाभ्यां लोचनाभ्येत्यसंभवम्[4] ।
श्रौतस्मार्तक्रियानित्यो नित्यनैमित्तिके रतः ॥५२॥
ईदृग्गृहस्थो जिज्ञासुः प्राप्य ज्ञानमनुत्तमम् ।
प्राप्तवेदान्तविज्ञानो वैष्णवं श्रयते पदम् ॥५३॥

(सकामस्य गृहस्थस्य ब्रह्मलोकप्राप्तिः)

केवलो [5]धर्मनित्योऽसौ ब्रह्मलोके महीयते ।

---

1. त्वरन् ? A B C E F.
2. जपयज्ञरतो नित्यं D.
3. स्थितः B.
4. इत्थमेव सर्वेषु कोशेषु पाठः ; "लोकानामेत्य संपदम्" इति भवेत् .
5. ब्रह्मनित्यः A B C E F.

(अथ वानप्रस्थधर्माः)

गार्हस्थ्यादथवा पूर्वं[1] वानप्रस्थ्यं श्रयेत्पदम् ॥५४॥
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं वनं चाथ समाश्रयेत् ॥५५॥
ग्राम्याहारं परित्यज्य वन्याहारोपयोगवान् ।
बहिरात्मनि वाऽप्यग्निं जुह्वद्यज्ञपरायणः ॥५६॥
वत्सरे वत्सरे त्रीणि तपांसि विधिवच्चरेत्[2] ।

(वानप्रस्थस्यापि निष्कामकर्मिणो मोक्षप्राप्तिः)

कुर्वन्वनस्थः शास्त्रार्थानकामहतया धिया ॥५७॥
सेवमानो व्रतस्थश्च तास्ता दीक्षाः समाहितः ।
वृत्तिसंकोचकृच्छ्रस्तत्त्वजिज्ञासया युतः ॥५८॥
संप्राप्य तत्त्वविज्ञानं वैष्णवं श्रयते पदम् ।

(सकामस्य तस्य ब्रह्मलोकप्राप्तिः)

केवलो धर्मनित्यश्च[3] महाप्रस्थानमाचरन्[4] ॥५९॥
वीतशोकभयो वन्यो ब्रह्मलोके महीयते ।

(अथ संन्यासिधर्माः)

काषायवसनं प्राप्य द्वाभ्यामादित एव वा[5] ॥६०॥

---

1. पूर्वाद्वानप्रस्थम्? B C E F; पूर्णाद्वानप्रस्थम् A.
2. चरन् D.
3. नित्यधर्मश्च A.
4. चरेत् A B C.
5. च B C.

द्वयोरेकस्य वा पश्चात्पारिव्राज्यं समाचरेत्[1] ।
प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् ॥६१॥
लब्धानुज्ञो गुरोर्वाथ [2]कर्मश्रान्तो महाव्रती ।
समारोप्याग्निमानग्नींश्चतुर्थाश्रममावसेत्[3] ॥६२॥
विमुक्तः सर्वदोषेभ्यो विरक्तो विषयेषु च ।
उच्चावचां विचिन्वंश्च गतिमस्यान्तरात्मनः ॥६३॥
अन्वीक्षमाणः सूक्ष्मं च परमात्मानमात्मना ।
प्रसंख्यानपरो नित्यं वेदान्तज्ञानतत्परः ॥६४॥
समाधिस्थश्च सततं ब्रह्मव्रतपरोऽपि वा ।
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ॥६५॥
विद्वेषमनुरागं वा द्वयोरप्यविचिन्तयन् ।
वायुभूतः खवत्स्वस्थ उर्वीस्थिरमना मुनिः ॥६६॥
वारिवच्चार्द्रचेतास्तु शुचिर्ज्वलनवत्तथा ।
गाङ्गो ह्रद इवाक्षोभ्यः शून्यागारसमाकृतिः ॥
धियाऽऽलोचितसर्वार्थो धिया लब्धपरिग्रहः ।
धिया स्वीकृतसच्छास्त्रो धिया तृप्तः सुशुद्धया ॥

---

1. चरन् D.
2. कर्मशान्तः A B C; कर्माश्रान्तः E.
3. वसन् A B C E F.

दत्तसर्वाभयो योगी सर्वैर्दत्ताभयस्तथा[1] ।
स्वाध्यायाद्योगमासीनो योगात्स्वाध्यायमामनेत्[2] ॥
अब्रुवन्केनचित्किंचित्प्राप्ते कालेऽप्यविब्रुवन् ।
समः सर्वेषु भूतेषु मातृवत्पितृवत्सदा ॥७०॥
आत्मज्योतिरात्मरतिः प्रसीदन्नात्मनि स्वयम् ।
प्रज्ञाप्रासादमारूढो विमुक्तः सर्वतो जनैः ॥७१॥
भूमिष्ठानिव शैलस्थः पश्यन्सर्वानवस्थितान् ।
[3]कैश्चिज्जूक इति प्रोक्तः कैश्चिद्धीर इतीप्सितः ॥
कैश्चित्कास्विदिति प्रोक्तः कैश्चिद्धोर[4] इतीरितः ।
उपेक्षाकरुणामैत्रीमुदितालिङ्गितः सदा ॥७३॥
विवेकबोधसंतोषैर्नित्यं परिजनैर्वृतः ।
भैक्षाशी तुष्टिसंपूर्णो धर्मैरीदृग्गुणैर्युतः[5] ॥७४॥

(संन्यासिनः परमपुरुषोपासनान्मोक्षप्राप्तिः)

प्रदीप इव शान्तार्चिः परिव्राड्ध्यानमास्थितः[6] ।
देहसंस्कारनाशेन[7] वैष्णवं श्रयते पदम् ॥७५॥

---

1. सर्वैर्मुक्ताभयः D.
2. आत्मनः D.
3. कैश्चिन्मूढः D.
4. कैश्चिच्चोरः A B C E F.
5. यमैः A B C E F.
6. ध्यानसंमतः D.
7. नाशे सः B E F.

(अध्यायार्थनिगमनम्)

**इति वर्णाश्रमा ये[1] ते तुल्यवैशेषिकैर्युताः ।**
**[2]धर्मास्ते लेशतः प्रोक्ताः किंभूयः श्रोतुमिच्छसि ॥**

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम्
अधिकारिनिरूपणं नाम पञ्चदशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ९००)

---

1. एते तुल्याः सर्वाश्रमैर्युताः A B C E F.
2. धर्मस्ते लेशतः प्रोक्तः A B C.

ओम्।

## अथ वर्णोत्पत्तिनिरूपणं नाम षोडशोऽध्यायः।

(तत्रादौ रक्षातदधिकारिविषयः प्रश्नः)

**श्रीनारदः।**

**भगवंस्त्रिदशारिघ्न सर्वज्ञ वृषकेतन।**
**प्रमाणार्थः श्रुतोऽस्माभिः सहेतुः सविपर्ययः॥ १॥**
**सर्वस्यास्य च का रक्षा कश्च रक्षाधिकारवान्।**
**सप्रकारमिदं द्वन्द्वं भगवन्वक्तुमर्हसि ॥ २॥**

(अथ तत्प्रतिवचनारंभः)

**अहिर्बुध्न्यः।**

**सुदर्शनमयी रक्षा देवस्य हरिमेधसः।**
**[1]स्वमूर्ते विष्णुसंकल्पं रक्षाऽन्यत्र वि[2]धीयते ॥ ३॥**

(वस्तुनिष्ठसामर्थ्यस्य सुदर्शनात्मकत्वम्)

**या सा दिव्या क्रियाशक्तिर्विष्णुशक्त्यंशसंभवा।**

---

1. तत्र ते B C; संभूते D.
2. यद्यपि सर्वत्रैवमेव पाठः; अथापि "न धीयते" इति पाठः साधीयानिति प्रतीमः.

सुदर्शनाह्वया देवी सर्वकृत्यकरी विभोः[1] ॥५॥
तन्मयं विद्धि सामर्थ्यं सर्वं सर्वपदार्थजम् ।
तत्त्वानां तात्त्विकानां च चेतनाचेतनात्मनाम् ॥
प्रमाणानां विचित्राणां भावाभावयुगस्य च ।
धर्मस्यार्थस्य कामस्य मुक्तेर्बन्धत्रयस्य च ॥६॥
यद्यत्स्वकार्यसामर्थ्यं तत्तत्सौदर्शनं वपुः[2] ।

(शस्त्रास्त्रव्यूहस्य रक्षासाधनत्वम्)

[3]उक्ता शस्त्रास्त्ररूपा ते विष्णुसंकल्पविक्रिया ॥७॥
यया देवो जगन्नाथः काले काले जनार्दनः ।
अवतीर्याथवाऽऽविश्य भूतानि [4]लघयेद्ध्रुवम् ॥८॥

(मन्त्रग्रामस्यापि रक्षासाधनत्वम्)

नानामन्त्रमयी चान्या यन्त्रकोशविचित्रिता ।
वेद[5]तन्त्रोभयोद्भूता नानाप्रसवशालिनी ॥९॥
साक्षाद्विष्णोः क्रियाशक्तिः शुद्धसंविन्मयी परा ।

(मन्त्रमयरक्षायां ब्राह्मणस्यैवाधिकारः)

सर्वतत्त्वार्थपारज्ञः सर्वविद्याविशारदः ॥१०॥

---

1. हरेः D.
2. परम् D.
3. उक्तशास्त्रार्थरूपा ते A B C F; उक्ता शास्त्रार्थरूपा ते E.
4. ललयेद्भुताम् ? A B C E F.
5. तन्त्रमयोद्भूता A B C E F.

अस्कन्ननित्यनैमित्तः शुद्धाभिजनसंमतः ।
त्रिशुक्लो निस्त्रिसंदेहः षट्कर्मविधिपारगः ॥११॥
ब्राह्मणो ब्रह्मयोनिस्थः स्वदारनिरतः शुचिः ।
अधिकुर्यात्क्रियाशक्तिं विष्णोर्मन्त्रमयीं पराम् ॥

(ब्राह्मणस्यापि राजानवष्टब्धस्य रक्षायामसामर्थ्यम्)

ब्राह्मणो नानवष्टब्धस्तया कार्यमिहार्हति ।
अवष्टभ्य तु राजानं जगतोऽर्थे तया चरेत् ॥१३॥

(राजप्रशंसा)

राजा हि परमं भूतं सर्वदेवमयो विभुः ।
क्रियाशक्तेरधिष्ठानं वैष्णव्या भगवन्मयः ॥१४॥
मूर्धतो हि पुरा देवो राजानमसृजत्प्रभुः ।
मूर्धाभिषिक्तस्तेनासौ सर्वभूतोपरि स्थितः ॥१५॥
द्विगुणो [1]ब्राह्मणो राजा वेदशास्त्रेषु गीयते ।

(राजद्विषां दृष्टादृष्टयोः प्रत्यवायः)

यस्तु तं द्वेष्टि संमोहात्स हरिं द्वेष्टि दुर्मतिः ॥१६॥
यो हरिं द्वेष्टि संमोहात्स लक्ष्मीं द्वेष्टि मानवः ।
लक्ष्म्या द्वेष्टा तु दुर्मेधाः सर्वधर्मेषु[2] हीयते ॥१७॥
स भ्रष्टः सर्वलोकेभ्यः [3]सर्वदेवबहिष्कृतः ।
अप्रतिष्ठे तमस्यन्धे समास्तिष्ठति शाश्वतीः ॥१८॥

---

1. ब्रह्मणो A B C.
2. धर्मेण D.
3. सर्ववेद° B C E.

(अतो राजाऽवश्यं बहुमन्तव्यः)

ऐहिकामुष्मिकीं लक्ष्मीमतः प्रेप्सुरुदारधीः ।
राजानं बहुमन्येत सर्वलोकाधिदैवतम् ॥१९॥

(केवलयोर्ब्राह्मणराज्ञोर्लक्ष्म्या अस्थिरत्वम् )

ब्राह्मणे केवले लक्ष्मीर्न वसत्यतिमार्दवात् ।
अत्यौग्र्याद्बिभ्यती क्षत्रे केवले नेच्छति स्थितिम् ॥

(संसृष्टयोस्तयोर्लक्ष्म्याः स्थैर्यम् )

ब्रह्मक्षत्रे तु संपृक्ते ह्यग्नीषोममयात्मनि ।
निवसत्य[1]तिसं[2]प्रीता ग्रीष्मे शीत इव ह्रदे ॥२१॥

(तत्र हेतुः)

द्वे हि ते बिभ्रतो लोकस्थितिं संभूय तेजसी ।
तयोर्हि सकला शक्तिः स्थिता विष्णोः क्रि[illegible]ात्मिका ॥

(अन्वयव्यतिरेकाभ्यां तत्र दृष्टान्तकथनम् )

महत्या हि यथा नद्याः कुसरो न धृतेः क्षमम् ।
एवं लघुर्नरो नैव क्रियाशक्तेर्धृतौ क्षमः ॥२३॥
पारावारो यथा धीरो महतीं तां [3]प्रतीच्छति ।
[4]ब्रह्मपृक्तं तथा क्षत्रं क्रियाशक्तिं [3]प्रतीच्छति ॥२४॥

---

1. अनिशं D.
2. पूता B C.
3. प्रयच्छति B C E F.
4. ब्रह्मवृत्तम् D.

पूर्यमाणं महानद्या कुतटाकं विदीर्यते ।
रक्ष्यमाणस्तथाऽप्येको नैव पर्याप्यते तया ॥२५॥

(राजार्थे प्रयुक्ताया अपि क्रियाशक्तेः सदृष्टान्तं सर्वप्रजोपकारकत्वकथनम्)

यथा समुद्रगामिन्यां महत्यां सरिति ध्रुवम् ।
उपस्नेहेन पूर्यन्ते सरांस्यन्यानि भूयसा ॥२६॥
प्रयुक्तायां क्रियाशक्तौ चक्रे वै चक्रवर्तिनः ।
चक्रस्था हि प्रजाः सर्वाः [1]समेधन्ते तथा श्रिया॥

(चक्रवर्त्यादीनां क्रियाशक्तावधिकारतारतम्यम्)

चक्रवर्ती नृपः पूर्वां द्वितीयां मण्डलेश्वरः ।
[2]अधिकुर्यात्क्रियाशक्तिं तृतीयां विषयेश्वरः ॥२८॥
महामात्रो द्विजातिर्वा यो बह्वी रक्षति प्रजाः ।
[3]इमां नैको नरः कुर्यादेकस्मै मानवाय तु ॥२९॥

(क्रियाशक्तिस्वरूपकथनारम्भः)

अधिकारः क्रियायाश्च शक्तेस्ते संप्रदर्शितः ।
[4]रूपमस्या यथावन्मे गदतस्तन्निशामय ॥३०॥

(सामान्यतः शक्तेर्द्वैविध्यम्)

उन्मेषः परमः शक्तेर्विष्णोः कोट्यंशकोटिशः[5] ।

---

1. समेध्यन्ते E F.
2. अधिकुर्यादिमां शक्तिं D.
3. इमामेको B C E F.
4. रूपावस्थां A B C E F.
5. कोटितः E F.

भाव्यभावकभेदेन स द्विधा व्यवतिष्ठते[1] ॥३१॥
भावको विष्णुसंकल्पः सुदर्शनपराह्वयः[2] ।

(शक्तेः पर्यायशब्दाः)

सैषा[3] देवी क्रियाशक्तिः सामर्थ्यं योग इत्यपि ॥
पारमेष्ठ्यं महातेजो मायायोग इतीदृशैः ।
शब्दैः प्रकारसामर्थ्यैः[4] संकल्पः सोऽभिधीयते ॥

(भावकस्य भूत्यंशप्रवर्तकत्वम्)

भाव्यो नाम य उन्मेषः सा भूतिरिति गीयते ।
शुद्ध्यशुद्धिमयी सेति पूर्वमेव निदर्शितम् ॥३४॥
ज्वलनस्येव सा ज्वाला संकल्पेन प्रतन्यते ।
एको नारायणो देवस्तस्य भावानुगामिनी ॥३५॥
तस्या देव्याः क्रियाशक्तेः स्थितिं मन्त्रमयीं शृणु ।

(उद्यन्त्याः क्रियाशक्तेर्नादात्मकत्वम्)

उद्यन्ती सा क्रियाशक्तिर्भजते नादरूपताम् ॥३६॥

(नादस्य दीर्घघण्टाध्वनिसाम्यम्)

तं नादं परमं विद्धि दीर्घघण्टानदोपमम् ।

(तस्य योगिमात्रप्रत्यक्षविषयत्वम्)

परमैर्योगिभिः स्वान्ते स साक्षात्क्रियते स्वयम् ॥

---

1. त्ववतिष्ठते D.
2. समाह्वयः A B C.
3. 'सैषा' इत्यारभ्य 'शृणु' इत्यन्तं नास्ति D पुस्तके.
4. इत्थमेव सर्वत्र पाठः.

(क्वचिदुन्मेषात्तस्य बिन्दुरूपत्वम्)

स बुद्बुदवदम्भोधौ क्वचिदुन्मेषमृच्छति ।
अनुद्रुतगतेः सो[1]ऽथ योगिभिर्बिन्दुरुच्यते ॥३८॥

(बिन्दोर्नामनामिरूपेण द्वैविध्यम्)

नामनामिस्वरूपेण स बिन्दुर्भिद्यते द्विधा ।

(नाम्नः शब्दब्रह्मत्वम्)

तत्र नामोदयं प्राप्य शब्दब्रह्म प्रवर्तते ॥३९॥

(नामिनो भूतिरूपत्वम्)

प्राप्य नाम्युदयं भूतिः पूर्वोद्दिष्टा प्रवर्तते ।

(नामपरिणामविशेषरूपमन्त्रमार्गप्रपञ्चनाय वर्णोत्पत्तिकथनारम्भः)

नामोदयमिदानीं मे [2]मन्त्राध्वानं मुने शृणु ॥४०॥
सा हि बिन्दुमयी शक्तिः स्वेच्छया नामतां गता ।
अवर्णोऽप्येकधा पूर्वमनुत्तर[3]मयात्मना ॥४१॥

(बिन्दोर्द्वैविध्यम्)

स्वरव्यञ्जनभेदेन स द्विधा व्यवतिष्ठते ।
बिन्दुशक्तेरमुष्यास्तु भूयोऽपि शृणु विस्तरम् ॥
उदेत्येषा विसृष्टाख्या शब्दसर्गमयी परा ।
एकानेकविचित्रा[4]र्था नानावर्णविकारिणी ॥४३॥

---

1. सोऽयम् B C.
2. मन्त्रध्यानम् D.
3. मलात्मना D ; मथात्मना E F.
4. विचित्रस्था A B C E F.

साक्षात्सोमस्वरूपा सा लक्ष्म्याः शब्दमयी तनुः ।
स्वरव्यञ्जनरूपेण सा विवर्तं प्रपद्यते ॥४४॥

(अकारात्मना तस्य समुन्मेषः)

अ[1] इत्यादिसमुन्मेषः सोऽनुत्तर उदीर्यते ।

(अकारस्य सर्ववाग्रूपत्वम्)

सर्वा वागयमेवैकस्तत्तदाकारभेदवान् ॥४५॥

(बिन्दोरिकारोकारात्मना समुन्मेषः)

स इच्छाबिन्दुरिति व्यक्त उन्मिषन्नुरिति स्मृतः ।

(यथोक्तवर्णत्रयस्य सर्वस्वरविभावकत्वम्)

एत एव त्रयो वर्णाः सर्वस्वरविभावनाः ॥४६॥

(तेषां दीर्घतापत्तिः)

अनुत्तरः स आनन्द आभावं प्रतिपद्यते ।
इरिच्छया स[2] ईशान ईभावं प्रतिपद्यते ॥४७॥
उ[3]रुन्मिषन्नूनरूप ऊभावं प्रतिपद्यते ।

(एचामुत्पत्तिः)

अनुत्तरेच्छासंधानादेकारो नाम जायते ॥४८॥
अनुत्तराद्भवन्भूय ऐभावं प्रतिपद्यते ।
दिव्यादनुत्तरोन्मेषादोकारो नाम जायते ॥४९॥

---

1. अ इत्यस्यायमुन्मेषः A B C E F.
2. द्विरीशाना A B C E F.
3. उन्मिषन्नूनरूपेण D.

अनुत्तराद्भवन्भूय औभावं प्रतिपद्यते ।

(तेषां संध्यक्षरत्वम्)

संध्यात्मान इमे कूटाश्चत्वारः समुदाहृताः ॥५०॥

(तेषामवयवार्थाविष्करणम्)

अनुत्तरेच्छायोगेन ह्येधमानः स ए स्मृतः ।
भूयोऽनुत्तरसंयोगादै चाप्यैश्वर्यवान्स्मृतः ॥५१॥
दिव्याद[1]नुत्तरोन्मेषादोतः सर्वत्र [2]औ स्मृतः ।
अनुत्तरात्स संभूय और्जित्यादौगतिं गतः ॥५२॥

(ऋऌवर्णोत्पत्तिः)

एकत्रिभागयो ऋद्ध्या अरयो ऋ स्मृतो बुधैः ।
अलयोश्च तथा [3]ऌत्वमाकारः स्यादनुत्तरः ॥५३॥
भूयोऽप्यनुत्तरोद्योगाल्लवमानस्तथा स्मृतः ।
एवं [4]चतुर्दशोद्योगान्नानाकारविभाविनी ॥५४॥
[5]नटीव कुण्डलीशक्तिराद्या[6] विष्णोर्विजृम्भते ।
अस्य रूपद्वयं सूक्ष्मं सृष्टिसंहारकारणम् ॥५५॥

---

1. अनुत्तमोन्मेषात् D.
2. चो D.
3. अनुमितोऽयं पाठः ; कोशेषु तु 'क्ऌसं' इत्येव दृश्यते.
4. चतुर्दशोद्योगा नाना° E F.
5. नदीव A B C F.
6. ह्या A B C F.

[1]अनाख्येया महासत्ता क्रियाशक्तिः क्रमेण सा ।
शब्दात्मना [2]विवर्त्स्यन्ती सा पुरा याति सृष्टिताम् ॥
सृष्टिः सर्गो विसर्गश्च विसर्जनमितीदृशैः ।

(नाभौ कुण्डल्याः पश्यन्तीत्वम् )

मूलाधारात्समुद्यन्ती सा शान्ता सा निरञ्जना ॥
अङ्क्ष्यन्ती साऽञ्जनैस्तैस्तैः संस्कारैः समनुत्तरम् ।
[3]दृष्टिदृश्यात्मतां प्राप्य शब्दार्थत्वविवर्तिनी ॥५८॥
पश्यन्ती नाम नाभौ सा योगदृश्योदयं गता ।
शक्तिः सा वैष्णवी सत्ता मन्त्रमाता समञ्जना ॥५९॥
अधिकारक्षयं यान्ति योगिनस्तां गता धिया ।

(तस्या हृदब्जे विस्तारः)

विजृम्भणो[4]न्मुखी लक्ष्मीः पश्यन्ती सा क्रियामयी ॥
[5]भावं संस्कृत्य संस्कारैः [6]समर्थाख्यां विवर्तनाम् ।
भृङ्गीव निनदन्ती सा [7]हृदब्जे याति विस्तृतिम् ॥
वाच्यवाचकभावेन लोलीभूता क्रियामयी ।
तदा संस्कृतयः सर्वाः स्मृतीः पुष्यन्ति वाच्यगाः ॥

---

1. अनाख्या या D.
2. विवस्वन्ती D ; विवत्स्यन्ती B E F.
3. द्रष्टृ° B C D.
4. उन्मुखा D.
5. एवम् B C E F.
6. स्वमर्थाख्यविवर्तनम् A B C E F.
7. हृदये A B C E F.

(तस्याः कण्ठदेशे विसर्गात्मना परिणामः)

एवंविधा क्रियाशक्तिस्तत्तद्वाच्यविवक्षया ।
[1]शब्दरूपं समास्थाय कूटस्थं व्यक्तिवर्जितम् ॥
[2]सा यात्यनुत्तरं स्पृष्ट्वा कण्ठं शक्तिर्विसर्गिणी ।
[3]पुनः साऽनुत्तरे स्थित्वा चतुर्दशविभाविनी ॥६४॥
अनुत्तरोत्तरा याति कण्ठे हेति विजृम्भणम् ।
ततः सादिमयी भूत्वा [4]कान्ता व्यञ्जनशालिनी ॥
अनुत्तरमयी भूयो बिन्दौ संप्रातितिष्ठति ।
बिन्दुः संहार इत्युक्तो विसर्गः सृष्टिरुच्यते ॥६६॥
इमौ द्वौ सृष्टिसंहारौ लेशतस्ते निदर्शितौ ।
मत्तः शृणु मुने भूयः स्वराणां विविधां ततिम् ॥

(स्वराणामवान्तरभेदनिरूपणारम्भः)

यदादित्रितयं पूर्वं स्वरकूटस्थमीरितम् ।
अष्टादशविधं तत्तु प्रत्येकं योगिनां मतम् ॥६८॥
स्वरव्यञ्जनकूटौ यौ ऋऌ इत्युदितौ पुरा ।
आद्योऽष्टादशधाऽन्त्यस्तु तयोर्द्वादशभेदवान् ॥६९॥
इति स्वराणां पञ्चानामशीतिश्चतुरुत्तरा ।
[5]स्वरकूटास्तु चत्वारो ये तेषामीदृशी भिदा ॥७०॥

---

1. शाब्दं स्वरूपमास्थाय D.
2. सा यात्यनुत्तरपृष्ठा ? B C E F.
3. 'पुनः' इत्यादि 'संप्रातितिष्ठाति' इत्यन्तं D पुस्तके न दृश्यते ।
4. सर्वत्रायमेवपाठः ; अथापि 'कान्तव्यञ्जनशालिनी' इति युक्तः प्रतिभाति.
5. इदमर्धद्वयं A B C E F पुस्तकेषु न दृश्यते.

शतानि त्रीण्यथैकारा विंशतिश्चतुरुत्तरा ।
एवं पञ्चसहस्राणि शतान्यष्टावनुष्टुभाम्[1] ॥७१॥
ऐकारः कथितः सम्यक् शिक्षातत्त्वविशारदैः ।
ओकारश्च तथौकार इयद्भेदौ प्रकीर्तितौ ॥७२॥
[2]रम्यौ गौरौ यमित्येव संख्या संभूय संधिगा ।
योगिनस्तां प्रपश्यन्ति [3]मन्यन्ते मनसा नराः ॥
संभूय [4]स्वरसंख्या तु [5]स्तब्धौ गौरो यमित्यसौ ।
द्विस्तावन्तः स्वरा ज्ञेयाः सृष्टिसंहारभेदिताः ॥
सर्गयुक्ता बिन्दुयुक्ताः केवला इति ये त्रिधा ।
देहोऽर्थः सङ्ग इत्येव ते संभूय चतुर्दश ॥७५॥
सृष्टिः सोमः समाख्याता बिन्दुः सूर्य उदीर्यते ।

(स्वराणां सूर्यचन्द्रकिरणात्मकता)

पूर्वे सप्त स्वराः सूर्यकिरणाः परिकीर्तिताः ॥७६॥
सोमस्य किरणा ज्ञेया आकारादय उत्तरे ।

(तयोरहोरात्रप्रवर्तकत्वम्)

अहर्नयति सूर्यस्तु स्वरैः पिङ्गलया चरन् ॥७७॥

---

1. अनुष्टुभः D ; अत्र ग्रन्थलोपः संभाव्यते.
2. 'रम्यौ गौरौ यमित्येव संख्यो संभूय संधिगाः' ? D.
3. मर्त्यत्वे मानसाः A B C.
4. स्वात्मसंख्या तु A B C D.
5. तक्षो गौरो E ; तल्पो B C F.

रात्रिं सृजति सोमस्तु स्वरैः स्वैरिडया चरन् ।

(परशक्तेः सुषुम्नासंचारित्वम्)

स्वराणां या परा विष्णोः कूटस्था शक्तिरुज्ज्वला ॥
सुषुम्नया संचरते शब्दब्रह्म वितन्वती ।
इति ते लेशतः प्रोक्ता स्वराणां गतिरुत्तमा ॥७९॥

(व्यञ्जनसृष्टिकथनारम्भः)

अथ व्यञ्जनसृष्टिं ते कथयामि मुने शृणु ।

(विसर्गस्य वासुदेवमूर्तित्वम्)

अनुत्तरोत्तरा सृष्टिर्या सा हेति पुरोदिता[1] ॥८०॥
आदिव्यूहस्य देवस्य वासुदेवस्य सा तनुः ।
अच्युतो बिन्दुयुक्तोऽसौ रुन्धन्नाधारमादिमम्[2] ॥८१॥
साऽग्निं दीपयते नादं योगारम्भे तु योगिनाम् ।
अच्युतः सृष्टियुक्तोऽसावूर्ध्वसृष्टिं करोति च ॥८२॥
अच्युतः सृष्टियुक्तस्तु बहिःसृष्टिं करोत्ययम् ।

(तस्मादूष्मणामुत्पत्तिस्तेषां चातुरात्म्यं च)

[3]हात् सात् षात् शात्ततः शश्वच्छक्त्यूष्माण उदीरिताः ॥

---

1. पुरेरिता B C E F.
2. सादिमम् D.
3. "हात् सात् षात् शात् ततस्तद्वच्छश्वच्छक्त्यूष्माण ईरिताः" इति सर्वत्र.

चातुरात्म्यमिदं प्रोक्तं चतुर्ब्रह्मेति शब्दितम् ।

(क्षकारसहितानां तेषां ब्रह्मशब्दवाच्यत्वम्)

क्षेण कूटेन संयोगात्पञ्च ब्रह्मेति शब्दितम् ॥८४॥

क्षस्तु सत्यस्य बीजं तु प्रोक्तः सात्त्वतशासने ।

[1]कषकूटमुशन्त्यन्ये नित्यं तत्प्रतिरूपकम् ॥८५॥

(अन्तःस्थानामुत्पत्तिस्तेषां संज्ञात्रयं च)

शाद्वस्तस्माल्ल उद्दिष्टो लाद्रो राद्यः प्रजायते ।

[2]धारणा नाम विज्ञेया [3]याद्या विश्वस्य धारणात् ॥८६॥

अन्तस्था इति च प्रोक्ता अन्तस्थपुरुषेशयाः ।

अवस्था इति च प्रोक्ता [4]ईशावतरणक्रमे ॥८७॥

(मकारोत्पत्तिः)

यकारादीशश[5]क्तिस्थान्मकारो नाम जायते ।

अनुत्तरोत्तरो बिन्दुर्म इति प्रतिशब्द्यते ॥८८॥

(तस्य सर्वचेतनसमष्टिरूपत्वं जीववाचित्वं च)

चेतनानां तु सर्वेषां समष्टिः सा निगद्यते ।

---

1. कक्ष° D ; तक्ष° A ; तं क्ष इत्यन्येषु.
2. सारणा D.
3. साद्यविश्वास° A B ; पाद्या विश्वस्य D ; साद्या विश्वस्य C.
4. ईशाय D.
5. युक्ति D.

अस्मदर्थोऽयमुद्दिष्टः[1] सोऽयमुत्तमपूरुषः ॥८९॥

(भकारोत्पत्तिस्तस्य च प्रकृतिवाचित्वम्)

सूक्ष्मेक्षयाऽनुवृद्धौ सा प्रकृत्या भोग्यरूपया[2] ।
भ इत्येव मकारात्सा पुनः स्थूला विविच्यते ॥

(बादिटान्तत्रयोदशवर्णोत्पत्तिः)

भोगोपकरणाकारा बहिरन्तर्व्यवस्थया ।
त्रयोदशात्मना व्यक्ता बाद्या[3] टान्ता महामुने ॥

(बादित्रयस्य महदहंकारमनोवाचित्वम्)

बुद्धिश्चाहंकृतिश्चैव मनश्चेति मनीषिभिः ।
बादित्रितयमुद्दिष्टं[4]

(तवर्गस्य ज्ञानेन्द्रियवाचित्वम्)

नादि तान्तं तु धीन्द्रियम् ॥९२॥

(टवर्गस्य कर्मेन्द्रियवाचकत्वम्)

णादि टान्तं तु कर्माख्यम्

---

1. अस्मदर्थ इत्यादिः सार्धश्लोकः D पुस्तके न दृश्यते.
2. भोग॰ A B C D.
3. पाद्या D.
4. पादि D.

(अथ चवर्गोत्पत्तिस्तस्य तन्मात्रवाचित्वम्)

अथ भोग्योद्भवो द्विधा।
ञादि चान्तं तु तन्मात्रपञ्चकं प्रविजृम्भते॥९३॥

(कवर्गोत्पत्तिस्तस्य महाभूतवाचित्वम्)

ङादिः पञ्चमहाभूता कान्ताऽन्या वर्णसंततिः।
यस्माद्यस्योद्भवो वर्णात्तत्त्वसृष्ट्या[1] तु तत्स्मरेत् ॥

(ळकारोत्पत्तिः)

लस्यैव कारणान्यत्वे ळकारो नाम जायते।

(व्यञ्जनानां वैविध्यम्)

चतुस्त्रिंशदिति प्रोक्ता वर्णास्ते व्यञ्जनात्मकाः ॥
एवमेकैकशो योगाद्भेदाः स्युर्बहवः स्वरैः।
चतुःपञ्चाशदुद्दिष्टाः ककारास्तत्र वै मुने ॥९६॥
किकाराश्च कुकाराश्च कृकाराश्च तथाविधाः।
क्लृकारास्तत्र षट्त्रिंशत्केकारा रसधीर्मुने ॥९७॥
तथाविधाश्च कोकारा योगिभिः संख्यया स्मृताः।
स्तब्धस्वार्थो यमित्येवं कैंकारो[2] योगिभिः स्मृतः ॥
कौकाराश्च तथासंख्याः सप्त संहत्य ते पुनः।
देहोऽर्थः सङ्ग इत्येवं संख्याताः परमर्षिभिः॥९९॥

---

1. तत्त्वसृष्ट्यादि B C D E F.
2. कैकारा योगिभिः स्मृताः D.

वे[1]गव्यञ्जनसंख्यैव दे[2]होऽर्थः साङ्गभेदिताः ।
नीतिमत्प्र[3]तिभा हेति संख्यया जायते मुने ॥१००॥
स्वरव्यञ्जनसंयोगादियं संख्या समीरिता ।
एकद्वित्र्यादिसंयोगैर्व्यञ्जनानां क्रमात्क्रमात् ॥
केवलानां सस्वराणां ततः संख्याविधिः स्मृतः ।

(वर्णमातृकाया भगवच्छक्तिप्रोतत्वम्)

पदवाक्यप्र[4]माणादिनानाकोरकशालिनी ॥१०२॥
वर्णस्तम्बा [5]ज्ञानमूला शब्दशक्तिर्हि वैष्णवी ।
विष्णुना देवदेवेन तेन शक्तिमता स्वयम् ।
स्थूलसूक्ष्मपरत्वेन प्रोतेयं वर्णसंततिः ॥१०३॥

(भगवदाज्ञया रुद्रांशस्यापि वर्णमातृकाधिष्ठातृत्वम्)

तदाज्ञयाऽस्मदंशैश्च रुद्रैर्नानाविधैरियम् ।
मन्त्रयोनिरियं देवी मातृकाऽधिष्ठिता सदा ॥१०४॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

वर्णोत्पत्तिनिरूपणं नाम षोडशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १००४)

---

1. योग B C.
2. देहोत्थाः सङ्ग B C.
3. ॰त्प्रतिभागेति A B C E F.
4. प्रबन्धादि D E F.
5. ज्ञानमूलम् A B C E F.

ओम् ।

## अथ वर्णसंज्ञानिरूपणं नाम सप्तदशोऽध्यायः ।

[ध्यायिनां सुखदं नित्यं ज्वालाजटिलकुन्तलम् ।
सुदर्शनाख्यं तद्दिव्यं महः किमपि धीमहि ॥][1]

(तत्र वर्णमातृकाधिष्ठातृरूपप्रश्नः)

श्रीनारदः ।

नमस्ते शर्व सर्वज्ञ सर्वासुरनिबर्हण ।
स्थूलसूक्ष्मपरैर्भावैर्यथा वर्णा अधिष्ठिताः ॥ १ ॥
विष्णुना देवदेवेन रुद्रैश्च भवदंशजैः ।
तथा तं मे परं भावं वक्तुमर्हसि शंकर ॥ २ ॥

(तत्प्रतिवचनप्रतिज्ञा)

अहिर्बुध्न्यः ।

विष्णुशक्तिमया वर्णा विष्णुसंकल्पजृम्भिताः ।
अधिष्ठिता यथा भावैस्[2]तथा तन्मे निशामय ॥ ३ ॥

---

1. श्लोकोऽयं D पुस्तके न दृश्यते.
2. भावैस्तन्मे निगदतः शृणु A B C E F.

(वर्णाधिष्ठातृवैष्णवरूपाणि)

[1]प्रथमश्चाप्रमेयश्च व्यापकोऽकार उच्यते ।
आनन्द आदिदेवश्च गोपनश्चाः स्मृतो बुधैः ॥४॥
इष्ट इन्द्रश्च रामश्च इकारः [2]परिपठ्यते ।
विष्णुश्च पञ्चबिन्दुश्च माया चेकार उच्यते ॥५॥
उकार उदयश्चापि ह्युद्दामो भुवनाह्वयः ।
प्रज्ञाधारश्च लोकेश ऊर्ज ऊकार उच्यते ॥६॥
ऋकार ऋतधामा च सत्यश्चाङ्कुश एव च ।
ज्वाला [3]प्रसरणश्चैव ॠकारो विष्टराह्वयः ॥७॥
ऌकारस्तारकः प्रोक्तो लिङ्गात्मा भगवानिति ।
ॡकारो दीर्घघोणश्च देवदत्तस्तथा विराट् ॥८॥
एकारस्तु जगद्योनिस्त्र्यश्रो विग्रह एव च ।
[4]ऐकारश्च तथैश्वर्यं योगी ह्यैरावणस्तथा ॥९॥
[5]ओदनश्चोतदेवश्च विक्रम्योकार उच्यते ।
[6]और्वो भूधरसंज्ञश्चाप्यौः स्मृतो ह्यौषधात्मकः ॥१०॥
त्रैलोक्यैश्वर्यदो व्यापी व्योमेशोंकार एव च ।
अंकारः सृष्टिकृत्प्रोक्तो विसर्गः परमेश्वरः ॥११॥

---

1. अप्रमेयः प्रथमश्च D.
2. परिकीर्त्यते D E F.
3. प्रसा° D.
4. ऐश्वर्ये योगधाता च ऐसत्त्वे रावणः स्मृतः A B C E F.
5. ओकार ओतदेहश्च ओदनश्चाथ विक्रमी A B C E F.
6. और्वोथ भूधराख्यश्च औस्मृतो ह्यौषधात्मकः A B C E F.

ककारः कमलश्चैव करालः प्रकृतिः परा ।
खकारः खर्वदेहश्च वेदात्मा विश्वभावनः ॥१२॥
गकारस्तु गदध्वंसी गोविन्दश्च गदाधरः ।
घकारस्त्वथ घर्मांशुस्तेजस्वी दीप्तिमांस्तथा ॥१३॥
ङकार एकदंष्ट्राख्यो भूतात्मा भूत[1]भावनः ।
चन्द्रांशुश्चश्चलश्चक्री चकारः परिकीर्त्यते ॥१४॥
छन्दः[2]पतिः छलध्वंसी छकारः छन्द एव च ।
अजितो जन्महन्ता च जकारः शाश्वतः स्मृतः ॥
झकारो झषसंज्ञस्तु सामगः सामपाठकः ।
ञकार उत्तमाख्यश्च ईश्वरस्तत्त्वधारकः ॥१६॥
विश्वाप्यायकरश्चन्द्री ट आह्लाद उदीरितः ।
धाराधरो ने[3]मिसंज्ञष्ठकारः [4]कौस्तुभो मतः ॥१७॥
मौसलो दण्डधारश्च डकारोऽखण्डविक्रमः ।
ढकारो विश्वरूपश्च [5]दृढकर्मा प्रतर्दनः ॥१८॥
णकारोऽभयदः शास्ता वैकुण्ठः परिकीर्तितः ।
तकारस्ताललक्ष्मा च वैराजः स्रग्धरस्तथा ॥१९॥

---

1. वाहनः A.
2. प्रतिच्छल° A B C.
3. निमिसंज्ञः D.
4. कौस्तुभस्तथा D.
5. वृषकर्मा D.

धन्वी भुवनपालश्च थकारः सर्वधारकः[1] ।
दत्तावकाशो दमनो दकारः[2] शान्तिदः स्मृतः ॥
धकारः शार्ङ्गधृग्धामा[3] माधवश्च प्रकीर्तितः ।
नरो नारायणः पन्था नकारः समुदाहृतः ॥२१॥
पकारः पद्मनाभश्च पवित्रः पश्चिमाननः ।
फकारः फुल्लनयनो लाङ्गली श्वेतसंज्ञितः[4] ॥२२॥
बकारो वामनो ह्रस्वः पूर्णाङ्गः स च कथ्यते ।
भल्लातको भकारश्च ज्ञेयः सिद्धिप्रदो ध्रुवः ॥२३॥
मकारो मर्दनः कालः प्रधानः परिपठ्यते ।
चतुर्गतिर्यकारश्च सुसूक्ष्मः शङ्ख उच्यते ॥२४॥
अशेषभुवनाधारो रोऽनलः कालपावकः ।
लकारो विबुधाख्यश्च धरेशः[5] पुरुषेश्वरः ॥२५॥
वराहश्चामृताधारो वकारो वरुणः स्मृतः ।
शकारः शंकरः शान्तः पुण्डरीकः प्रकीर्तितः ॥२६॥
[6]नृसिंहश्चाग्निरूपश्च षकारो भास्करस्तथा ।
सकारस्त्वमृतस्तृप्तिः सोमश्च परिकीर्तितः ॥२७॥

---

1. सर्वरोधकः D.
2. दत्तात्रेय इति स्मृतः D.
3. धृग्धर्ता D.
4. संज्ञकः D.
5. परेशः D.
6. श्लोकोऽयं न दृश्यते D पुस्तके.

[1]सूर्यो हकारः प्राणस्तु परमात्मा प्रकीर्तितः ।
अनन्तेशः क्षकारस्तु वर्गान्तो गरुडः स्मृतः ॥
[2]बिन्दुः संहार इत्युक्तो विसर्गः सृष्टिरुच्यते ।
विष्णुशक्तिमया एते स्थूलसूक्ष्मपरात्मकाः ॥२९॥
अप्रमेयादयो भावाः शतं सार्धमुदीरिताः ।

(वर्णाधिष्ठातृरौद्ररूपाणि)

वर्णास्तेऽधिष्ठिता यैस्तैर्मदंशै रुद्रसंज्ञितैः ॥३०॥
तान्निबोध महाभागानक्षरस्थान्महामुने ।
[3]श्रीकण्ठानन्दसूक्ष्मेशास्त्रिमूर्तिरमरेश्वरः ॥३१॥
अङ्घ्रीशो भारभूतिश्च तिथिः [4]स्थाणुर्भवाह्वयः ।
[5]चण्डीशो भौतिकः सद्योजातश्चा[6]नुग्रहेश्वरः ॥३२॥
अक्रूरश्च [7]महासेनः स्युरेताः स्वरमूर्तयः ।
ततः क्रोधीशचण्डीशपञ्चान्तकशिवोत्तमाः ॥३३॥
तथैकरुद्रः कूर्मैकनेत्राह्वचतुराननाः ।
अजेशः शर्वसोमेशौ लाङ्गली दारिकस्तथा ॥३४॥

---

1. 'हः प्राणः परमात्मा च दिव्यः सूर्य इतीरितः' A B C; हकारः परमात्मा च दिव्यः सूर्य उदीरितः E F.
2. इदमर्धं न दृश्यते D पुस्तके.
3. श्रीकण्ठानन्तसूक्ष्माश्च D.
4. स्थाणुर्हराह्वयः D.
5. झण्टीशो D E F.
6. °श्चाहग्र° B C.
7. महासौम्यः D.

अर्धनारीश्वरश्चोमाकान्तश्चाषाढदण्डिनौ ।
अत्रिर्मीनश्च मेषश्च लोहितश्च शिखी तथा ॥३५॥
चलगण्ड[1]द्विगण्डौ च समहाकालवालिनौ ।
भुजङ्गेशः पिनाकी च खड्गीशश्च बकस्तथा ॥३६॥
[2]श्वेतो भृगुर्वकुलीशः संवर्तक इतीरितः ।
रुद्रमूर्तय उद्दिष्टा [3]मदीया वर्णपालिकाः ॥३७॥

(वर्णचक्रपद्मनिरूपणम्)

तथा वर्णमयं चक्रं पद्मं [4]चापि निबोध मे ।
प्रणवोऽक्षः समुद्दिष्टः शक्तिर्नाभिरुदीरिता ॥३८॥
अकचाः टतपाश्चैव सवर्ग्या अरपद्धतिः ।
यादयो नेमिरुद्दिष्टा गरुडः प्रधिरुच्यते ॥३९॥
प्रणवः कर्णिका प्रोक्ता शक्तिः केसरपद्धतिः ।
स्वरद्विरष्टकं [5]वर्गा अन्तस्था ऊष्मभिः सह ॥४०॥
पत्राष्टकमिदं प्रोक्तं गरुडो दीप्तिरुच्यते ।
इति चक्राब्जमध्यस्था मातृकावर्णमालिनी ॥४१॥
मन्त्रयोनि[6]र्महादेवी वैष्णवी षड्गुणात्मिका ।

---

1. द्विरण्डौ D E F.
2. 'श्वेतो भृगुश्च लकुलीशः संवर्तक इतीदृशाः' D.
3. मदीया इत्यादिकं समुद्दिष्ट इत्यन्तं नास्ति B C.
4. च विनिबोध A.
5. वर्णा D.
6. महाशक्तिः A D.

(वर्णमातृकात्मकवैष्णवशक्तिस्वरूपवर्णनम्)

आदिवर्णप्रक्लृप्ताङ्गा वर्गाभरणभूषिता[1] ॥४२॥
पद्मगर्भप्रतीकाशा शङ्खपङ्कजधारिणी ।
ङणवेनाथ शक्त्या च श्रिया संक्लृप्तदेहका[2] ॥४३॥
स्वरसंपूर्णवदना कचक्लृप्तकरद्वया ।
टतक्लृप्तपदद्वन्द्वा पादिक्लृप्तोदरा शुभा ॥४४॥
यरप्राणोष्मका देवी लकारवरहारिणी ।
[3]वकारकाञ्चीसुभगा शषकुण्डलधारिणी ॥४५॥
सहृत्का हान्तरात्मा च क्षप्रभा वर्णमालिनी ।
पाशाङ्कुशक ाभ्रा च वाणी ध्येया विपश्चिता ॥४६॥

(प्रथमं वैष्णवशक्त्याराधनम्)

वक्ष्यमाणेन मन्त्रेण पुरैवाराधयेद्गिरम् ।

(ततो मन्त्रोद्धारः)

[4]लब्धानुज्ञस्ततो देव्या गुरुपङ्क्तिं समर्च्य च ॥४७॥
गणेशमभिपूज्याथ मन्त्रानिष्टान्समुद्धरेत् ।

(वैष्णवरूपैरेव वैष्णवमन्त्रोद्धरणम्)

अप्रमेयादिभिर्भावैर्वैष्णवा ुद्धरेत्सुधीः ॥४८॥

---

1. वर्णाभरण° इति सर्वत्र.
2. देहया B C.
3. 'वकारकटिसूत्रा तु शषौ वै कुण्डलं भवेत्' B C.
4. लब्ध्वाऽनुज्ञां ततो D.

(रौद्रमन्त्राणां रौद्ररूपैरुद्धरणं शक्तिमन्त्राणां शक्तिरूपैः)

रौद्रान्रुद्रैस्ततः शाक्तान्भारत्यंशैः[1] समुद्धरेत् ।
यद्यपि व्यापका मन्त्रा नित्यं सिद्धा महामुने ॥
स्युः शक्तिशालिनो मन्त्रा एवं सृष्टिविचिन्तनात् ।

(उक्तक्रमोल्लङ्घने प्रत्यवायः)

उज्झित्वोक्तक्रमं यो हि मन्दात्मा मन्त्रमुद्धरेत् ॥
भवन्ति शापदा मन्त्रास्तस्य शास्त्रातिवर्तिनः ।

(अनुल्लङ्घनेऽभ्युदयः)

अनुज्झित्वा क्रमं सर्वं यः सुधीर्मन्त्रमुद्धरेत् ।
तस्याध्ययनमात्रेण मन्त्रः सिद्धिं प्रयच्छति ॥५१॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

वर्णसंज्ञानिरूपणं नाम सप्तदशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १०५५)

---

1. भारत्यङ्गैः D E F.

ओम् ।

## अथ मन्त्रोद्धारो नामाष्टादशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्रादौ शक्तिमन्त्रोद्धारः)

अहिर्बुध्न्यः ।

शक्तिं समुद्धरेत्पूर्वमग्नीषोमात्मना स्थिताम् ।
विष्णुस्थां परमात्मस्थां स्पृशन्तीं व्यापिनीं पुनः ॥
वाणीहृदयमादाय[1] योजयेदन्तरात्मना ।
हृदा पुनः समायोज्य योजयेदूष्मणो द्वयम्[2] ॥२॥
पञ्चबिन्दुं महाशक्तिं स्मरेदथ तदासनाम् ।
व्योमेशमाश्रयन्तीं तां स्मरेदथ धिया पुनः ॥३॥

(संक्षेपतस्तत्प्रभावः)

इयं दिव्या महाशक्तिः सोमसूर्याग्निभूषणा ।

---

1. ॰माधाय D.
2. यमः D.

माया नाम तनुर्विष्णोस्त्रैलोक्यैश्वर्यदोज्ज्वला ॥
स्थूलसूक्ष्मपरत्वेन शक्तिरेषा निदर्शिता ।
सौदर्शनानां मन्त्राणामियं योनिर्महामुने ॥५॥
विष्णुसंकल्परूपाणां ये चान्ये वैष्णवा भुवि ।
इयं सा परमा शक्तिरहंतेयं हरेः परा ॥६॥
विचित्रानेकशब्दार्थतत्तत्संकल्पकोरका ।
युग्मान्तैरादिभिः षड्भिराद्यन्तस्वरषट्कयोः ॥७॥
अङ्गक्लृप्तिः समुद्दिष्टा शक्त्या मेलितया स्वया ।

(सौदर्शनमहामन्त्रोद्धारः)

मनसाऽभ्यस्य तां शक्तिं सन्तोषावधि वैष्णवीम् ॥
समुद्धरेन्महामन्त्रं सौदर्शनमनन्यधीः ।
अमृतं शक्तिहृद्भूतमप्रमेयेन वर्णयेत्[1] ॥९॥
दिव्यं तदन्तरात्मानं परमात्मानमञ्जसा ।
योजयेत्प्रथमेनैव तत्स्थां तृप्तिं तु केवलाम् ॥१०॥
केवलं तत्स्थितं सोमं तत्स्थितं[2] च स्मरेत्सुधीः ।
अशेषभुवनाधारं तत्स्थ[3]मानन्दमेव च ॥११॥
कालपा[4]वकमादाय दुष्टपापेन्धनानलम् ।
योजयेद्व्यापकेनैव नानाविधविभाविना ॥१२॥

---

1. कल्पयेत् E.
2. तत्तत्स्थानं स्मरेत्सुधीः B C.
3. तत्स॰ D.
4. प्रापक॰ D.

(संक्षेपतस्तत्प्रभाववर्णनम् )

[1]दशाक्षरी महाविद्या शक्तिः सौदर्शनी त्वियम् ।
स्थूलसूक्ष्मपराकारा विष्णुसंकल्परूपिणी ॥१३॥
तत्तद्विचित्र[2]संकल्पसदसद्भावभाविनी ।
सर्वभावानुगा विष्णोः परा सौदर्शनी स्थितिः ॥
[3]आकाशादिपृथिव्यन्तभूतिभेदानुयायिनी ।
सूक्ष्मा सौदर्शनी शक्तिः कारणादिवि[4]भागिनी ॥
तत्तद्दुरितदैत्यौघतमोविध्वंसनात्मिका ।
स्थू[5]लचक्रस्वरूपाढ्या विष्णोः [6]सांकल्पिकी स्थितिः ॥
स्वरव्यञ्जनकूटस्थैः पूर्णेयं चतुरक्षरी ।
निदानं सर्वसिद्धीना[7]मपदं लाभनाशयोः ॥१७॥
कूटे [8]त्र्यर्णमये त्वस्याः परतः प्रायशः स्थि[9]तेः ।
याभ्यां षडक्षरी सैषा विद्या भुवनकारिका ॥१८॥

---

1. दशाक्षरा D.
2. °संकल्पा D.
3. आगमादि° D.
4. °विभाविनी A B C E F.
5. स्थूला D.
6. संकल्पसंस्थितिः A B C.
7. °नां स्वपदाम् B C; °नामापदाम् E.
8. त्वर्णमये D.
9. स्थितः A B C F; स्थितिः E.

(त्रेधा पञ्चमबीजकथनम्)

परमात्मानमादाय योजयेदुदयेन तु ।
प्रधानं संस्पृशेद्भूयः परं बीजं तु पञ्चमम् ॥१९॥
[1]रूर्यमुद्दामकालाढ्यं सूक्ष्मं तद्बीजमुच्यते ।
सप्राणं भुवनाधारं रक्षोदुरितमर्दनम् ॥२०॥
स्थूलं तु पञ्चमं बीजं सौदर्शनमनुत्तमम् ।

(त्रेधा षष्ठबीजकथनम्)

यत्तत्सांकर्षणं घोरं लाङ्गलं परमायुधम् ॥२१॥
योजयेदप्रमेयेण चन्द्रिकाकेवलेन च ।
परं तत्परमं षष्ठं दीप्तिशालि सुदर्शने ॥२२॥
सर्वशास्त्रार्थकूटस्थमिति[2] तेजोऽप्रमेयकम् ।
षष्ठे परा[3] स्थितिर्बीजे सेयं नारद दर्शिता ॥२३॥
तत्फुल्लनयनाकारं फुल्लैर्यन्नयनैर्वृतम्[4] ।
प्रथितं प्रथमाक्रान्तं विश्वाप्ययकृदुज्ज्वलम् ॥२४॥
सूक्ष्मं षष्ठं समुद्दिष्टं बीजं सौदर्शनं परम् ।
यस्मान्नयति सन्मार्गं छित्त्वा[5]ऽघं बाह्यमान्तरम् ॥

1. सार° A B C E F.
2. °मति° D E.
3. वरा A B C D.
4. °रुन्नयनैर्वृतम् B C.
5. नित्वाऽघम् D.

प्रथते च मुहुर्वृद्ध्या विश्वमाप्याययत्यपि ।
इयं ते मध्यमावस्था सूक्ष्मा षष्ठी प्रदर्शिता ॥२६॥
[1]श्वेताख्या व्यापकाक्रान्ता आह्लादेन तु केवलम् ।
षष्ठी स्थूला समुद्दिष्टा विधा नारद ते मुने ॥२७॥
स्थाणुं छित्वा यथा दग्ध्वा [2]पूर्वं केदारकारकः ।
फल[3]प्रापणबीजानि प्रथयित्वा च वारिणा ॥२८॥
आप्याय्य शान्तसंतापो व्याप्नुवन्विविधं फलम् ।
आह्लादं लभतेऽतीव सेयं षष्ठी परा मुने ॥२९॥
इति ते दर्शिता शश्वच्छक्तिः सा षोडशाक्षरी ।

(सुदर्शनगायत्री)

स्वशक्त्या तु समाक्रान्ता गायत्री सेयमीरिता ॥३०॥

(पुनः शक्तिमन्त्रवैभवः)

एषा सौदर्शनी शक्तिर्भवबीजक्षयंकरी ।
[4]जप्ताऽर्चिता हुता ध्याता तारयत्येव साधकम् ॥३१॥
अस्याः प्रातिस्विकं बीजं चतुर्थं कूटमुत्तमम् ।
स्मृता प्रातिस्विकी शक्तिस्[5]तृप्तिः सोमामृतात्मिका ॥

---

1. श्वेताख्यो व्यापकाक्रान्त आह्लादेन च केवलम् D.
2. पुरा A B C.
3. °प्रमाण° A B C E.
4. जप्तार्चितहुतध्याता D.
5. तृप्तिसोमा° D; इतः प्रभृति सपाददशश्लोकाः C पुस्तके लुप्ताः.

(शक्तिमन्त्रस्य प्रथमद्वितीयाक्षराभ्यां पुरुषसूक्तश्रीसूक्ताविर्भावः)

अक्षरादादिमादस्याः सूक्तं पौरुषमुद्गतम् ।
द्वितीयाक्षरसंभूतं श्रीसूक्तं नाम यन्मुने ॥३३॥

(संक्षेपतो मन्त्रार्थवर्णनम्)

[1]सहयोर्यत्स्मृतं ज्ञानं तत्सहस्रारमुच्यते ।
सहो बलं समाख्यातं तत्स्रवत्यखिलेन यत् ॥३४॥
तत्सहस्रं समाख्यातम[2]नन्तं प्राणनं च तत् ।
[3]अरं ज्ञानं समाख्यातं नित्यशुद्धं निरञ्जनम् ॥३५॥
ज्ञानक्रियात्मिका [4]शक्तिरिति सौदर्शनी कला ।
संप्राप्योदयमुद्दामं भुवनस्य कृते स्वयम् ॥३६॥
प्राणसूर्यात्मिका भूत्वा परमात्मस्वरूपिणी ।
निहत्य दुरितं [5]शश्वद्विश्वमाप्यायय[6]न्त्यपि ॥३७॥
श्वे[7]ता प्रसन्नभूयिष्ठा स्वयमानन्दते मुहुः ।
[8]संहतैर्विगृहीतैश्च वाक्यैर्वर्णैः पदैरपि ॥३८॥

---

1. सहसोर्यत्स्मृतम् A; महसोर्यत्स्मृतम् B.
2. °मनन्तप्राणिगं D.
3. आरम् D.
4. शक्तिरतः सौदर्शनी परा D.
5. विश्वं विश्व° D.
6. °न्त्यपि A B E F G.
7. श्वेतप्र° A B E F.
8. संहतै° D.

लेशतोऽर्थगतिः प्रोक्ता विस्तृत्या[1] नैव शक्यते ।

(सुदर्शनसप्ताक्षरी)

प्रणवेन समाक्रान्ता सेयं सप्ताक्षरी स्मृता[2] ॥३९॥

(सुदर्शनाष्टाक्षरी)

[3]स्वशक्त्या च समाक्रान्ता सेयमष्टाक्षरी स्मृता ।

(सुदर्शननवाक्षरी)

श्रिया समेता भूयोऽपि स्मृता सैषा नवाक्षरी[4] ॥

(अथाङ्गसिद्ध्यर्थाङ्गमन्त्रः)

अथास्या अङ्गसिद्ध्यर्थमेकमङ्गं[5] निशामय ।
चन्द्रांशुमुद्धरेत्पूर्वमप्रमेयेण भूषयेत्[6] ॥४१॥
अशेषभुवनाधारं परप्रकृतिसंयुतम् ।
आनन्देन समाक्रान्तं द्वितीयं कूटमुद्धरेत् ॥४२॥
चतुर्गतिमथादाय ह्यप्रमेयेण भूषयेत् ।
ततोऽमृतमुपादायाप्यमृताधारभूषितम् ॥४३॥
आनन्दयोजितं पश्चात्[7]परमात्मानमुद्धरेत् ।
आनन्दपूरितः[8] सोऽयं मन्त्रः सर्वाङ्गमन्त्रराट् ॥४४॥

1. विस्तृत्याम् D.
2. वरा D.
3. इदमर्धं न दृश्यते D पुस्तके.
4. नवाक्षरा A B.
5. °शुद्ध्यर्थम् E F.
6. भूषितम् D.
7. कृत्वा D.
8. °पूरितम् D.

अतिचञ्चलदीप्ताग्निः फुल्लोत्कमलसंनिभः ।
सूर्यानलसहस्राभ आदिदेवसमद्युतिः ॥४५॥
नित्यतृप्तश्च मन्त्रात्मा सूक्ष्मावस्थ[1] उदाहृतः ।
[2]करालाकारवर्णाभा स्फुरच्चक्रायुता[3]न्विता[4] ॥४६॥
निहत्य दुरितं सर्वं प्राणेन स्वेन तेजसा ।
सो[5]मसूर्यात्मिका भूत्वा गोपायति जगत्त्रयम् ॥
इति स्थूला गतिर्दिव्या चक्रमन्त्रस्य दर्शिता ।
[6]इदं नानाविधैर्बीजैर्हृदयाद्यङ्गसंततौ ।
योजयेच्चक्रमन्त्रं तु [7]यथा तन्मे निशामय ॥४८॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

मन्त्रोद्धारो नाम अष्टादशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ११०३)

---

1. सूक्ष्मावस्था उदाहृता E.
2. करालकालवह्न्याभम् D.
3. °धा° E.
4. °तम् D.
5. सोमः सोम्यात्मना D.
6. युक्तं नाना° D.
7. यथावन्मे B C E F.

ओम् ।

## अथ अङ्गोपाङ्गमन्त्रोद्धारो नामैकोनविंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्रादौ हृदयमन्त्रः)

अहिर्बुध्न्यः ।

यत्तज्ज्ञानमयं दिव्यं गुणानां प्रकृतिः परा ।
पञ्चानां तु बलादीनां नित्यशुद्धं निरञ्जनम् ॥१॥
तन्नाम हृदयं मन्त्रं स षाड्गुण्यमयो यतः ।
तस्य वाचकमाकारमुद्धरेन्मनसा सुधीः ॥२॥
ज्ञानत्वादप्रमेयश्च[1] प्रथमो व्यापकः[2] स्मृतः ।
आनन्द आदिदेवश्च गोपनश्चेति षड्विधाः ॥३॥
क्रमात्संहृत्य तज्ज्ञानं सांकर्षणमनुत्तमम् ।
[3]तत्तद्विशेषसंयोगाद्विशेष्यस्तन्मयः सदा[4] ॥४॥

---

1. °मेयस्च D.
2. व्यापकस्तथा D.
3. तद्विशेषेण संयोगा° A B C E F.
4. तदा A B C E F.

इत्याभावसमायोगाज्ज्ञानात्मा मन्त्रराट् स्वयम् ।
हृदयाय नमः पश्चाद्व्यक्त्यर्थं संप्रयोजयेत् ॥५॥

(अथ शिरोमन्त्रः)

रमणीया समिद्धा च येच्छा दैवस्य शाश्वती ।
सर्वत्राप्रतिघा दिव्या ह्यमृताधारभेदिता ॥६॥
[1]वीति बीजेन निर्दिष्टा तच्चैश्वर्यं महद्धरेः ।
ऐश्वर्यं च शिरःस्थाने यत्तत्सर्वोपरि स्थितम् ॥
अविघातात्मकं यत्तदिच्छाया रूपमुत्तमम् ।
समिद्धं रमणीयं तदमृतस्याश्रयः परः ॥८॥
[2]वीति तद्द्योतकं बीजं तेन संयोजयेच्छिरः ।
तेन संयोजितश्चक्रमन्त्र ऐश्वर्यबृंहितः ॥९॥
[3]इच्छामिन्धान एवास्य मन्त्रिणः संप्रकाशते ।
ततस्तच्छिरसे स्वाहा व्यक्त्यर्थं संप्रयोजयेत् ॥१०॥

(अथ शिखामन्त्रः)

अमृता सोमरूपा च या सा तृप्तिमयी परा ।
जगत्प्रकृतिरीशाना विष्णुशक्तिः परावरा ॥११॥
तस्या यो भुवनाकार उद्दाम उदयोऽमलः ।
सु इत्येवं समाख्याता शक्तिरुद्योतिता सती ॥

1. इति A B C E F.
2. दिवि A B C E F.
3. इच्छात्मिका स्थान एव D.

विशेषयति रूपेण चक्रमन्त्रं सनातनम् ।
तया स[1] भेदितः शक्त्या शक्त्यात्मा संप्रकाशते ॥
या सा कुण्डलिनी शक्तिर्हृदयस्था समीरिता ।
योगिभिर्या शिखा तस्या दिव्या दीपाकृतिः परा ॥
प्रसरत्यूर्ध्वभागे तु शिखास्थाने विराजते ।
अतः शक्तेः शिखास्थाने न्यासस्तस्यास्ततः स्मृतः ॥
शिखायै वषडित्येवं व्यक्त्यर्थं संप्रयोजयेत् ।

(अथ कवचमन्त्रः)

[2]ऊर्जो नाम समुद्दिष्टो बलं विष्णोः स्वमूर्जितम् ॥१६॥
प्रज्ञाधारणसामर्थ्यं नित्यतृप्तिमयं परम् ।
सर्वकार्यैः समुद्युक्तः श्रमाभावे हि तृप्यति ॥१७॥
अशेषभुवनाधारस्त[3]द्बलं परिगीयते ।
[4]बले बलं धारणेद्धा बिभर्ति सकलं जगत् ॥१८॥
चतुर्गतिमयं यत्तत्प्राणानां परिगीयते ।
व्यानापानादिका सा च प्रोक्ता गतिचतुष्टयी ॥१९॥
चतुर्गतिमयः प्राणो बलं तत्परिगीयते ।
अजितो भगवान्येन जयत्यखिलमच्युतः ॥२०॥

---

1. स ह्योदिता A B C.
2. ऊर्जेन मघ उद्दिष्टो D.
3. शङ्खस्तत्परिगीयते A B C E F.
4. बले इत्यादि गीयते इत्यन्तमर्धचतुष्टयं न दृश्यते A B C.

एतैर्गुणैः समायुक्तं बलं तद्वैष्णवं महत् ।
अप्रमेयमनाद्यं तत्सूर्यशब्देन गीयते ॥२१॥
बलेन [1]भेदितो मन्त्रो बलात्मा व्यवतिष्ठते ।
बलं चाखिलगात्रेषु मूर्छितं विपुलं महत् ॥२२॥
अंसयोस्तदभिव्यक्तिरतस्तत्रैव विन्यसेत् ।
कवचाय हुमित्येव व्यक्त्यर्थं संप्रयोजयेत् ॥२३॥

(अथास्त्रमन्त्रः)

महत्ता न्यूनताऽभावः स च स्यादविकारिता ।
अव्याहतस्वसंकल्पः सुशब्दार्थो निरूपितः ॥२४॥
चेतनाचेतनं विश्वं स्वसंकल्पेन [2]भावयन् ।
यः स्यादविकृतः सोऽस्य भावो माहासुदर्शनः ॥
तद्वीर्यं तच्च शास्त्रोक्तं यद्दुष्टदमनात्मकम् ।
शान्तिदं सर्वपापानां शंकरं जगतामपि ॥२६॥
विकारविरहो दैत्यमर्दिनः परमात्मनः ।
महासुदर्शनेत्येवं तद्वीर्यं बहुधोच्यते ॥२७॥
वीर्येण भेदितो मन्त्रो वीर्यात्मा व्यवतिष्ठते ।
[3]तस्य हस्ततले स्थाने ततस्तत्तत्र विन्यसेत् ॥२८॥
ततोऽस्त्राय फडित्येवं व्यक्त्यर्थं संप्रयोजयेत् ।

---

1. बोधितो A B C E.
2. भावयेत् D.
3. 'हस्ततले स्थाने' इति प्रथमाद्विवचनान्तं बोध्यम्.

(अथ नेत्रमन्त्रः)

अन्तर्बोधस्वरूपो यः प्राकृतध्वान्तनाशनः ॥२९॥
सूर्यवत्तपतस्तस्य या ज्वालाऽप्यूर्ध्वगामिनी ।
पुरुषाणामशेषाणामैश्वर्यान्निरपेक्षता ॥३०॥
[1]अमृताधाररूपत्वमनिशं जन्म[2]घातकम् ।
नैरपेक्ष्येण यत्तस्य तत्तेजः समुदाहृतम् ॥३१॥
ज्वालाशब्देन तत्तेजो वैष्णवं बहुधेर्यते ।
तेजसा भेदितो मन्त्रस्तेजोरूपोऽवतिष्ठते ॥३२॥
तेजसो नयनं स्थानमतस्तत्तत्र विन्यसेत् ।
वौषण्णेत्रत्रयायेति [3]व्यत्यासाद्व्यक्तये पठेत् ॥३३॥
इति षाड्गुण्यरूपेयं दर्शिता तेऽङ्गसंततिः ।
उपाङ्गसंततिश्चैव न्यसनीया विपश्चिता ॥३४॥

(अथोपाङ्गमन्त्रः)

कुक्षिपृष्ठांसयुग्मोरु[4]जानुपादयुगेषु च ।
शाद्यर्णान्व्यापिसंयुक्तान्ज्ञानाद्यैर्नमसा सह ॥३५॥
विन्यसेत्षड्गुणात्मैव मन्त्री देहः प्रजायते ।
अप्रमेयो गदध्वंसी पन्थाः स्वर्गापवर्गयोः ॥३६॥

1. तेजस्वाधार॰ A B C; तेजस्त्वाधार॰ E F.
2. ॰घातनम् D.
3. व्यत्यस्य व्यक्तये A B C; व्यत्यस्य व्यत्यये E F.
4. ॰जङ्घा॰ B C.

इच्छामयो हि यो भावो विष्णुसंकल्पजृम्भितः ।
अशेषदुरितप्लोषात्सोऽग्निरित्युच्यते बुधैः ॥३७॥
अग्निना भेदितो मन्त्रस्त्वङ्ग्यात्मा व्यवतिष्ठते ।
प्राकारं कल्पयेत्तेन परितः पावकाकृतिम् ॥३८॥
अग्निप्राकारमध्यस्थो दुर्निरीक्षोऽभिजायते[1] ।
संस्मरंश्चक्रगायत्रीं परितश्चक्रमुद्रया ॥३९॥
ऊर्ध्वाधस्तिर्यगाकारं मुद्रयेदात्मनो बहिः ।
अग्निप्राकारतः पूर्वं चक्रमुद्राऽथवा भवेत् ॥४०॥

(अथ चक्रगायत्री)

हृदयं चाथ चक्राय विद्महे पदमादिमम् ।
मन्त्रनाथस्य नेत्रादिपदं सूक्ष्मोऽथ धीमहि ॥४१॥
गायत्र्या आद्यनवमे ततश्चैवानिवारितः ।
ततः समस्तरूपं तु गायत्र्या दशमं पदम् ॥४२॥
उदिता चक्रगायत्री सप्तविंशतिकीर्तिता ।
अथ सौदर्शनास्त्राणां मन्त्रानेतान्निबोध मे ॥४३॥

(अथ चक्राद्यस्त्रमन्त्राः)

ओं नमो भगवन्विष्णो सर्वेषामादिमं समम् ।
चक्रमूर्तिधरेत्येवं गदामूर्तिधरेति च ॥४४॥
[2]शार्ङ्गमूर्तिधरेत्येवं खड्गमूर्तिधरेति च ।

---

1. दुर्निरीक्ष्यो E.
2. इदमर्धं न दृश्यते A D.

चक्राद्यस्त्रचतुष्कं तु ततः सेनापतेपदम् ॥४५॥
सर्वत्र सममुच्चार्य वदेत्प्रातिस्विकं ततः ।
मन्त्रनाथो भवेच्चक्रे षड्वर्णोऽथ गदादिषु ॥४६॥
कौमोदकि महाशार्ङ्ग महाखड्गेत्युदीरयेत् ।
[1]वर्मास्त्रे च ततो युञ्ज्यादेष मौनविधिक्रमः ॥४७॥
इमाश्चतस्रो गायत्र्यश्चक्रादीनामुदीरिताः ।
शङ्खादीनां चतुर्णां तु मन्त्रानेतान्निबोध मे ॥४८॥

(अथ शङ्खादिमन्त्राः)

[2]ओं नमो भगवन्विष्णो सर्वेषामादितः समम् ।
शङ्खमूर्तिधरेत्येवं [3]हलमूर्तिधरेति च ॥४९॥
मुसलमूर्तिधरेत्येवं शूलमूर्तिधरेति च
सेनापतेपदं पश्चात्सर्वेषां तुल्यमुच्चरेत् ॥५०॥
महाऽथ पाञ्चजन्याय स्वाहेत्येकाधिको मनुः ।
महाहलाय स्वाहेति मन्त्रोऽप्येकाधिकः स्मृतः ॥
महा च मुसलायाथ [4]स्वाहेत्यभ्यधिको मनुः ।
महाशूलाय स्वाहेति स चाप्यभ्यधिको मनुः ॥
इमाश्चतस्रो गायत्र्यः शङ्खादीनां प्रदर्शिताः ।
दण्डादीनामथाष्टानामिमान्मन्त्रान्निबोध मे ॥

---

1. वज्रास्त्रे B C E F.
2. इदमर्धं न दृश्यते A B C.
3. खड्गमूर्तिधरेति च A B C.
4. स्वाहेति ऽभ्यधिको D.

(अथ दण्डाद्यस्त्रमन्त्राः)

ओं नमो भगवन्विष्णो सर्वेषामादितः समम् ।
दण्डमूर्तिधरेत्येवं कुन्तमूर्तिधरेति च ॥५४॥
शक्तिमूर्तिधरेत्येवं पाशमूर्तिधरेति च ।
अङ्कुशमूर्तिधराय कुलिशमूर्तिधरेति च ॥५५॥
परशुमूर्तिधरायाथ ततः शतमुखेति च ।
अनलमूर्तिधरेत्येवं प्रातिस्विकपदक्रमः ॥५६॥
सेनापतेपदं पश्चात्सर्वेषां [1]सममुच्चरेत् ।
महादण्डायाथ नमो मन्त्र एवाधिकः स्मृतः ॥
महाकुन्तायाथ नमो मन्त्रोऽप्येकोऽधिकः स्मृतः ।
महाशक्तये च नमो मन्त्रोऽप्येकोऽधिकः स्मृतः ॥
महापाशायाथ नमो मन्त्रोऽप्येकोऽधिकः स्मृतः ।
महाङ्कुशाय नम इत्येषोऽप्यधिक उच्यते ॥५९॥
महा च कुलिशायाथ नम इत्यपि तादृशः ।
महापरशवे चाथ नम इत्यपि तादृशः ॥६०॥
महाशतमुखेत्येवमनलाय ततो नमः ।
अयं मन्त्रस्त्रयस्त्रिंशद्वर्णो वह्न्ययुतप्रभः ॥६१॥
इत्यस्त्राणामिमे मन्त्रा रूपतस्ते निदर्शिताः ।

(अत्रानुक्तस्य संहितान्तराद्ग्रहणम्)

आधाराद्यासनाकारो द्वारपर्यन्त[?]जनम् ॥६२॥

---

1. सममुद्धरेत् B C E F.

मुद्रा च विविधाका । यस्य यस्य च यादृशी ।
अभिषेकविधिश्चैव दीक्षानियम एव च ॥६३॥
भूतशुद्धिविधिश्चैव [1]ध्यानानि विविधानि च ।
सर्वं जयाश्रुतं कार्यं तत्तद्वैशेषिकं विना ॥६४॥
अमुद्राणामिहास्त्राणां दण्डादीनां महामुने ।
कार्या समन्विता दिव्या शक्तिमुद्राऽस्त्रमुद्रया ॥
इति ते लेशतः प्रोक्तः सौदर्शनविधिक्रमः ।
ग्रहणादिप्रकारोऽयं वक्ष्यते शृणु तं मुने ॥६६॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
अङ्गोपाङ्गमन्त्रोद्धारो नामैकोनविंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः ११६९)

---

1. ज्ञानानि D.

ओम् ।

## अथ मन्त्रग्रहणादिदीक्षाविधानं नाम विंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्रादावाचार्यलक्षणम्)

अहिर्बुध्न्यः ।

वेदवेदान्ततत्त्वज्ञो विद्यास्थानविचक्षणः[1] ।
ऊहापोहविधानज्ञो दैवपित्र्यक्रियापरः ॥१॥
अवक्ता चापवादानामकर्ता पापकर्मणाम् ।
[2]अमत्सरी परोत्कर्षे परदुःखे घृणापरः ॥२॥
दयावान्सर्वभूतेषु हृष्टः परसुखोदये ।
पुण्येषु मुदितायुक्त उपेक्षावान्कुबुद्धिषु ॥३॥
तपःसंतोषशौचाढ्यो योगस्वाध्यायतत्परः ।
पाञ्चरात्रविधानज्ञस्तन्त्रान्तरविचक्षणः ॥४॥

---

1. विद्यास्नातो विचक्षणः D.
2. अमत्सरो॰ A B C; अमत्सरः E F.

तन्त्राणामन्तरज्ञश्च[1] मन्त्राणां कृत्यतत्त्ववित्[2] ।
पद्वाक्यप्रमाणज्ञो हेतुवाद्विचक्षणः ॥५॥
सामान्यस्यापवादस्य वेत्ता यन्त्रविचक्षणः ।
कुण्डमण्डलभेदज्ञः क्रियाकारविचक्षणः[3] ॥६॥
अध्यात्मज्ञानकुशलः शान्तो दान्तो जितेन्द्रियः ।
सदन्ववायसंभूत आचार्यो नाम वैष्णवः ॥७॥

(अथ शिष्यलक्षणम्)

आचार्यमाश्रयेच्छिष्यः श्रोत्रियोऽर्थी समाहितः[4] ।
विनयव्रतशाली[5] च द्विजातिः संस्कृतः शुचिः ॥
ब्रह्मचर्यपरो धीमान्स्वदारनिरतोऽथवा ।
अच्छलेन यथावत्स्वकृताकृतनिवेदकः ॥९॥
संसाराङ्गारमध्यस्थः पच्यमानः स्वकर्मभिः ।
भवन्तं शरणं प्राप्त उपसन्नोऽस्म्यधीहि भोः ॥१०॥
इत्येवं प्रतिपद्येत शिष्य आचार्यसत्तमम् ।

(अथ दीक्षाक्रमः)

इत्येवं संप्रपन्नाय शिष्यायाच्छलवादिने ॥११॥
प्रत्यक्षाभिः परोक्षाभिरुपाधिभिरनेकधा ।
शोधितायैकरूपाय रहस्याम्नायगोपिने ॥१२॥

---

1. मन्त्राणामन्तरज्ञश्च E F.
2. °ऐक्य° E F.
3. °कार्यवि° B.
4. श्रेयोर्थी सुसमाहितः D.
5. विनयी व्रत° E F.

अशठायानसूयाय लोभमोहाद्यसेविने ।
संवत्सरं परीक्ष्यैवं परितः परितो धिया ॥१३॥
निष्कम्पाय वदेद्विद्यां यावती यादृशी च सा ।

(अङ्गन्यासकरन्यासौ)

मातृकामादितो[1] देवीं विन्यसेद्वपुषि स्वके ॥१४॥
[2]अङ्गन्यासकरन्यासौ मन्त्रवर्णैः समाचरेत् ।
मृजेत्प्रकोष्ठमेकैकं त्रिर्मन्त्रेण त्रिरूपिणा ॥१५॥
एवं पाणितलद्वन्द्वमङ्गुलीष्वथ विन्यसेत् ।
उभाभ्यां मध्यमाग्राभ्यामुभयस्मिंस्तलद्वये ॥१६॥
तारकं तारिकां लक्ष्मीं प्रणवाद्यन्तगां न्यसेत् ।
प्रणवाद्यन्तगं सोमं मध्यमेऽङ्गुष्ठपर्वणि ॥१७॥
सबिन्दुं विन्यसेत्प्राणमेवं तर्जनिपर्वणि ।
न्यसेद्वर्णांस्तृतीयादीनङ्गुल्यन्तरपर्वसु ॥१८॥
लाङ्गलं परमास्त्रं तु न्यसेदूर्ध्वाङ्गुलीष्वथ ।

(ऋष्यादीनां स्थानभेदः)

ऋषिं शिरसि विन्यस्येच्छन्दो वदनगोचरम् ॥१९॥
नारायणमनाद्यन्तं देवतां हृदये स्मरेत् ।

(परसूक्ष्मस्थूलानामृषिभेदः)

पराकारस्य मन्त्रस्य परमात्मा ऋषिः स्मृतः ॥

---

1. ॰मभितो D.

2. 'हस्तन्यास' इति सर्वत्र.

संकर्षणस्तु सूक्ष्मस्य स्थूलस्याहमृषिः स्मृतः ।

(सुदर्शनमन्त्रस्याथर्वणवेदसारतमत्वम्)

अथर्वाङ्गिरसो नाम पञ्च शाखा महामुने ॥२१॥
तासु त्वन्तर्हितो दिव्यः कृतान्तो मन्त्रराट् स्वयम् ।

(संकर्षणाज्ञयाऽहिर्बुध्न्येन तदुद्धरणम्)

मया त्रेतायुगादौ तु तप्त्वा वर्षायुतं तपः ॥२२॥
दिव्यात्संकर्षणादेशात्परमेण समाधिना ।
सर्वं आथर्वणो वेदो मथितस्तु शनैःशनैः ॥२३॥
मथ्यमानात्ततस्तस्माद्दध्नो घृतमिवोद्धृतः[1] ।
मन्त्रोऽयं सपरीवारः साङ्गोपाङ्गः सनातनः ॥२४॥
स्थूलस्य मन्त्रनाथस्य ततो मामृषिमूचिरे ।
दैवी ब्राह्मी तथाऽऽर्षी च गायत्री छन्द उच्यते ॥
परः सूक्ष्मस्तथा स्थूलः परमात्मा च देवता ।

(देहे संहारन्यासक्रमः)

विन्यसेदथ गात्रेषु मन्त्रनाथं सनातनम् ॥२६॥
परसूक्ष्मादिभावेन सोमार्कानलदीधितिम्[2] ।
प्रणवादित्रयं मूर्ध्नि ललाटे सोममेव च ॥२७॥
आस्ये सूर्यं गले स्रां च हृदि रं नाभिगं तु हुं[3] ।
[4]मूलाधारे तु फट्कारं तारादित्रितयं हृदि ॥२८॥

---

1. °द्गतम् D; '°द्धृतम् A B C E F.
2. °दीपितम् D. 3. हम् D.
4. मूलाधारेऽथ D.

नाभौ समूरुगं[1] हं च पादयोः स्त्रां च रं हृदि ।
हुं वक्त्रे फट् शिरोदेशे ततः सर्वात्मना क्रिया[2] ॥

(अङ्गोपाङ्गन्यासः)

हृदयादीन्यथाङ्गानि स्वेषु स्थानेषु विन्यसेत् ।
उपाङ्गेषु तथा न्यासं मान्त्रैर्वर्णैः समाचरेत् ॥३०॥

(देहस्य त्रेधा विभावनम्)

स्थूलसूक्ष्मपरत्वेन देहं विद्यात्ततास्त्रिधा ।
अङ्गप्रत्यङ्गकोशाढ्यं[3] प्रत्यक्षं स्थूलमुच्यते ॥३१॥
पुर्यष्टकं तु सूक्ष्माख्यं परमाणव[4] उच्यते ।
वह्न्यर्ककोटिसंकाशज्वालाकोलाहलाकुले ॥३२॥
त्रिविधे मन्त्रनाथे[5]ऽस्मिंस्त्रिविधं भावये[6]द्वपुः ।
तेजो दिव्यं महच्छुभ्रं मनःस्वं ह्रस्वमव्ययम् ॥
नारायणमयं ध्यायेदात्मानं ज्योतिषां पतिम्[7] ।
ततस्तच्चक्रमध्या[8]क्षसोमसूर्यानलात्मनि ॥३४॥
मज्जयित्वा स्वमात्मानं निर्वासनमथोद्धरेत् ।

---

1. समारुगम् A B C E F; समूलगम् D.
2. त्रिधा D E.
3. °केशाढ्यम् D.
4. इत्थमेव सर्वत्र पाठः.
5. °राजे A B C E F.
6. व्यापयेद्वपुः D.
7. परम् D.
8. मध्याक्षं ? A B C E F.

(अथ सृष्टिन्यासः)

ततः परादिभावस्थान्मन्त्रनाथान्सनातनान् ॥
तेनैव क्रमयोगेन[1] तनूस्ता विसृजेत्पुनः ।
तासु प्रवेश्य चात्मानं पुनर्न्यासं समाचरेत् ॥३६॥
हस्तदेहादिगो[2] न्यासो यावत्पूर्वमुदाहृतः ।

(अथ शिष्यावेक्षणम्)

अथ मन्त्रतनुर्दिव्यो मन्त्रात्मा मन्त्रसारथिः ॥
विष्णुसंकल्पजं रूपं वहन्सौदर्शनं वपुः ।
नेत्रैः शिष्यमवेक्षेत वह्न्यर्केन्दुमयैः क्रमात् ॥३८॥

(शिष्यस्य संहारन्यासः)

अथ स्थूलादिभावेन दहेन्मन्त्रेण तद्धिया[3] ।
पूर्वोक्तक्रमयोगेन शिष्यात्मानं परात्मनि ॥३९॥

(अथ सृष्टिन्यासः)

निमज्जयित्वेत्याद्यं तु क्रमं सर्वं समाचरेत् ।
मनसा शुष्कदग्धोत्थे शिष्यदेहे तथा तथा ॥४०॥
विन्यसेत्क्रमयोगेन[4] मन्त्रन्यासं धिया ततः ।

(अथ मन्त्रोपदेशः)

अथ तस्योपदेष्टव्यः सहाङ्गो मन्त्रनायकः ॥४१॥

---

1. ०चक्रयोगेन A B C E F.
2. हस्तदेहादिको A B C E F.
3. तं धिया A B C E F.
4. क्रमशोऽङ्गेन B C E F.

सार्थः सप्रतिपत्तिश्च यो यो भावः पुरोदितः ।
एवं गृहीतमात्रे तु मन्त्रनाथे[1] सनातने ॥४२॥
उत्पद्यते[2] स्वयं चित्ते प्रत्ययो देवनिर्मितः ।

(अथ शिष्यकृत्यम्)

सम्यगित्थं गृहीतेन मन्त्रेणानेन मन्त्रवित् ॥४३॥
कृतार्थं मन्यमानः स्वं गुरवेऽथ निवेदयेत् ।
आत्मानमथ चात्मीयं यत्किंचिदुत विद्यते ॥४४॥
विना पापमनिष्टं च सर्वं तस्मै निवेदयेत् ।
एवं निवेद्य मन्वीत कृतार्थोऽहमिति स्वयम् ॥
एवंधियो[3] ह्यच्छलेन मन्त्रः स्वेन प्रकाशते ।
भावस्य[4] तारतम्येन तत्तद्दीक्षादिसाधनम् ॥४६॥
दीक्षया दीक्षयित्वाऽथ पात्रयित्वाऽथवा[5] धिया ।
संस्कारेणाथर्वणेन यद्वा संस्कृत्य मन्त्रतः ॥४७॥
मन्त्रोऽयमुपदेष्टव्यो गुरुणा गुरुसेविनः[6] ।
इत्थं ग्रहणसिद्धेन साधनेनाथ वाग्यतः[7] ॥४८॥
मन्त्रेणानेन सिद्धेन कुर्याल्लोकहितं सुधीः ।

---

1. मन्त्रराजे A B C.
2. उत्पाद्यते B C E.
3. एवं ध्यात्वां ह्यच्छलेन मन्त्रं स्वेन प्रकाशयेत्? A B C E F.
4. चलस्य A B C; छलस्य E F.
5. अथ पात्रया A B C.
6. गुरुसेविना E.
7. वाऽन्यतः A B C.

(क्षुद्रार्थं मन्त्रो न प्रयोज्यः)

न[1] जातु यस्य कस्यापि क्षुद्रस्यात्मन एव वा ॥
लौकिकेऽर्थे विधिः कार्यः क्षुद्रकृत्यं[2] हि तत्स्मृतम् ।

(मन्त्रप्रयोगविषयाः)

त्रैलोक्यस्याथ रक्षायै भुवश्चक्रस्य वा कृते ॥५०॥
राष्ट्रस्य वाऽथ राज्ञो वा राजमात्रस्य वा कृते ।
भावायैव विधिः कार्यो नैवाभावाय कर्हिचित् ॥

(मन्त्रपुरश्चरणार्थदेशविधिः)

पर्वताग्रे नदीतीरे विष्णोरायतनेऽपि[3] वा ।
ऋषीणामाश्रमे वाऽपि सिद्धानामालयेऽपि[4] वा ॥
गवामायतने वाऽपि वह्न्यायतन एव वा ।

(कृच्छ्रादिभिः शरीरशोधनम्)

त्रिभिः कृच्छ्रैर्विशोध्य स्वं गायत्रीनियुतेन वा ॥
त्रिभिर्वा ब्रह्मकूर्चोत्थैः स्नानैः सात्त्वतचोदितैः ।

(पुरश्चरणाङ्गनियमाः)

अहरेकं हरेर्बिम्बमापादम्[5]अवलोकयेत् ॥५४॥

---

1. न जात्वेकस्य D.
2. क्षयकृत्यम् A B C E F.
3. अथवा D.
4. °मयने° D.
5. °मापीठ° D.

ततो भैक्षहविष्याशी यावकेनोत वर्तयेत् ।
पयोव्रतो हविष्याशी यथा वा शक्नुयान्नरः ॥५५॥

(मन्त्रजपादिसंख्या)

जपेल्लक्षाणि षण्मन्त्री[2] जुहुयाच्चायुतानि षट् ।
तावच्च तर्पयेत्तोयैर्ब्राह्मणानथ[3] तर्पयेत् ॥५६॥

(मन्त्रसिद्धिः)

अच्छलेनेतिवृत्तस्य मन्त्रनाथः प्रसीदति ।

(तेन लोकसंरक्षा)

प्रसन्नेनाथ मन्त्रेण रक्षा लोकानुकम्पया ॥५७॥
राजार्थितेन वै कार्या नार्थकार्पण्यतः क्वचित् ।
इति ते दर्शितः सम्यङ्मन्त्रनाथस्य विस्तरः ।

(मन्त्रानधिकारिणः)

नादान्तैः श्रवणीयोऽयं नैव यादृशतादृशैः ॥५८॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

मन्त्रग्रहणादिदीक्षाविधानं नाम विंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १२२७)

---

1. इदमर्धं न दृश्यते A B C.
2. तन्मन्त्री D.
3. ब्राह्मणानपि A B C E F.

ओम् ।

## अथ ज्योतिर्मयरक्षानिरूपणं नामैकविंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(रक्षाप्रकारप्रश्नः)

श्रीनारदः ।

नमो निखिलगीर्वाणगणश्रेयोविधायिने ।
नमस्ते त्रिपुराराते भूयो गौरीगुरो नमः ॥१॥
अत्यद्भुतमिदं दिव्यं वेदान्तेष्वपि दुर्लभम् ।
श्रुतं भगवतो वाक्यं कृतार्थोऽहमनेन वै ॥२॥
भूयोऽहं श्रोतुमिच्छामि त्वद्वाक्यामृतमुत्तमम् ।
का रक्षा कीदृशी चैव कार्या मन्त्रेण मन्त्रिणा ॥

(रक्षाया द्वैविध्यम्)

अहिर्बुध्न्यः ।

रक्षा तु द्विविधा मान्त्री मन्त्रनित्येन धीमता ।
कार्या ज्योतिर्मयी पूर्वं पश्चात्तत्र च वाङ्मयी ॥४॥

(अक्षकल्पनम्)

यत्तद्दिव्यं महज्ज्योतिरक्षरं ब्रह्म शाश्वतम् ।
सूर्यस्य यः परः सूर्यश्चन्द्रश्चन्द्रस्य यः परः ॥५॥
अग्नेरग्निः परो दीप्तेस्तेजस्तत्तेजसामपि ।
नित्यतृप्तं सदानन्दमुदयास्तमयोज्झितम् ॥६॥
तदक्षं कल्पयेद्दिव्यमथ नाभिं स्मरेद्बुधः ।

(नाभिकल्पनम्)

तद्धर्मधर्मिणीं शक्तिं ब्रह्मणोऽनपगामिनीम् ॥७॥
[1]अनाकारामनौपम्यां लक्षयन्तीं सदा जगत् ।

(शक्तेः श्रीशब्दवाच्यत्वं तन्निर्वचनं च)

श्रयन्तीं श्रीयमाणां च शृणन्तीं शृण्वतीमपि ॥
महानन्दां महाभासां निर्विकारां [2]निरेषणाम् ।

(श्रियः षाड्गुण्यपूर्णता)

ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभावतीम् ॥९॥
[3]अनन्तामन्तरूपां तामभेद्यां सर्वभेदिनीम् ।
नन्दां भद्रां जयां पूर्णां रिक्तां चैवामृतां हराम् ॥
त्रिरूपामत्रिरूपां च सर्वप्रत्यक्षसंमताम् ।
निषेधैरनिषेध्यां तामविधेयां विधिक्रमैः ॥११॥

1. अज्ञाकारा° D.
2. निरीक्षणाम् A B C E F.
3. अनन्तानन्तरूपाम् A B C E F.

अवाच्यां वाचिकां नित्यां गौरीं लक्ष्मीं सरस्वतीम् ।

(अरकल्पनम्)

अराणि पञ्चकृत्यानि शक्तेस्तस्याः प्रकल्पयेत् ॥
तिरोभावं सृजिं चैव स्थितिं संहृत्यनुग्रहौ ।

(नेमिकल्पनम्)

व्यूहं व्यूहान्तरं चैव नेमिभावं प्रकल्पयेत् ॥१३॥
सच्चिदानन्दसन्दोहमस्पन्दस्पन्दलक्षणम्[1] ।
सर्वक्रियास्पदं शुद्धमक्रियास्पदसेवितम् ॥१४॥
उदयास्तमयस्थं तदुदयास्तमयोज्झितम् ।
अवस्थाविधुरं नित्यं शश्वच्चतुरवस्थितम्[2] ॥१५॥
अपदं चाक्रमं चैव क्रमास्थितचतुष्पदम् ।
अनायुधमसंरम्भं सर्वायुधसमन्वितम् ॥१६॥
शास्त्रशास्त्रार्थतद्भेदं फलकृत्तिविचक्षणम् ।
चन्द्रार्काग्निसहस्रौघकोटिकोट्यर्बुदोपमैः ॥१७॥
स्वभासां निचयैर्ध्वस्तसमस्तदुरितोदयम् ।

(विभवेशादीनां नेमिबाह्यस्थानकल्पनम्)

नेमिबाह्यस्थितान्ज्वालान्विभवेशाननुस्मरेत् ॥१८॥

---

1. ०पदलक्षणम् A B C E F.

2. इत्थमेव सर्वेषु कोशेषु पाठः ; वासुदेवादिरूपेण चतुर्धाऽवस्थितामिति कथं-चिद्व्याख्येयम्.

चन्द्रार्काग्निसहस्राभान्संविदानन्दलक्षणान् ।
सर्वाकारान्निराकारान्सर्वाभीष्टफलप्रदान् ॥१९॥
कान्तिज्वालाकुलालीढरक्षोदैत्येन्द्रदानवान् ।
धूम्रां ज्वालाकुलोत्थां च सृष्टिं शुद्धेतरां स्मरेत् ॥
त्रैलोक्यं धरणीं चक्रं मण्डलं वा तदीश्वरम् ।
अक्षस्थं कल्पयेत्तस्य यदीच्छेद्रक्षितुं धिया ॥२१॥

(एवं ध्यायिन आनुषङ्गिकं फलम्)

इत्थं विचिन्तयेद्यत्र मन्त्री मन्त्रार्थतत्परः ।
तत्र नश्यन्ति पाप्मान आधयो व्याधयोऽपि वा[1]॥
ईतयोऽरातयश्चैव न क्लेशा द्धते[2] पदम् ।
राजा विजयते नित्यं[3] शश्वत्त्विह्यन्ति मन्त्रिणः ॥
नित्यं माद्यन्ति मित्राणि सुख्यन्ति सुहृदस्तथा ।
बध्नन्ति बान्धवाः प्रीतिं सन्तः सन्ति च संततम् ॥
पोष्याः पुष्यन्ति चार्थानां श्रयन्ति श्रिय एव च ।
ऋध्नुवन्ति प्रजा नित्यं प्रसीदन्त्यः परस्परम् ॥
कामैर्धर्मान्निबध्नन्ति धर्मैर्धर्माननेकशः[4] ।
अर्थैः कामान्निबध्नन्ति तथा धर्मानशेषतः ॥२६॥

---

1. च D.
2. दधिरे A B C E F.
3. विश्वम् D.
4. धर्मैरर्थाननेकशः A B C E F.

[1]धर्मैरर्थान्निबध्नन्ति तथा कामानशेषतः ।
धर्मार्थाभ्यां तथा कामं कामार्थाभ्यां तथेतरम् ॥
अर्थं च धर्मकामाभ्यां संचिन्वन्ति सदा नराः ।

(अथ मुख्यफलकथनम्)

सर्वे स्वधर्मनिरतास्तथा कल्याणभागिनः ॥२८॥
संप्राप्य भगवज्ज्ञानं प्राप्नुवन्ति परं पदम् ।

(अध्यायार्थनिगमनम्)

इति ज्योतिर्मयी रक्षा लेशतस्ते निदर्शिता ।
रक्षां तु वाङ्मयीं प्रोक्तां गृणतो मे निशामय ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
ज्योतिर्मयरक्षानिरूपणं नामैकविंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १२५६)

---

1. इदमर्धं न दृश्यते A B C.

ओम् ।

## अथ मन्त्रमयरक्षानिरूपणं नाम द्वाविंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्रादौ चतुररब्रह्मचक्रम्)

अहिर्बुध्न्यः ।

शृणु मन्त्रमयीं[1] रक्षां वाङ्मयी या निगद्यते ।
यस्मिन्[2]विश्वमिदं प्रोतं सदेवासुरमानुषम्[3] ॥१॥
मन्त्रनाथः पुरा यो हि षड्वर्णः समुदाहृतः ।
कामधुक्साधकेन्द्राणामचिन्त्याश्चर्यबृंहितः ॥२॥
तं तारशक्तिश्रीबीजैर्ग्रथितं कल्पयेन्मनुम्[4] ।
तारेण वेष्टयेत्त्रिस्तं तथा शक्त्या तथा श्रिया ॥३॥
विलिखेत्परितो भूयः सहग्रथितमातृकम् ।
परितो विलिखेद्बाह्ये साध्यनाम विदर्भितम् ॥४॥

---

1. यन्त्रमयीम् D.
2. यस्य D.
3. मानवम् D.
4. लक्षयेन्मनुम् D.

मन्त्रेश्वरं बहिर्भूयस्तारशक्तिश्रिया लिखेत् ।
अक्षक्लृप्तिरियं दिव्या देवैरपि सुदुर्लभा ॥५॥
[illegible] कल्पयेन्नाभिं शक्तिश्रीकारलोलितम् ।
स्वाकारग्रथितेनैव मन्त्रनाथेन वेष्टयेत् ॥६॥
शक्तिश्रीतारग्रथितां मातृकां बहिरालिखेत् ।
अप्रमेयं ततस्तारं प्रथमं शक्तिमप्यतः ॥७॥
व्यापकं च श्रियं चेति क्रमात्पूर्वमरं लिखेत् ।
अप्रमेयेण ग्रथितं पार्श्वयोर्मन्त्रमालिखेत् ॥८॥
उद्दामादिक्रमेणैव दक्षिणं [2]चारमालिखेत् ।
[3]प्रासादादिक्रमेणैव पश्चिमं [2]चारमालिखेत् ॥९॥
[4]व्योमेशादिक्रमेणैवमुत्तरं चारमालिखेत् ।
इयं चतुररी दिव्या सुरैरपि सुपूजिता ॥१०॥
आद्यन्तयोरराणां च रेफं मन्त्राक्षरं लिखेत् ।
कालानलसमज्योतिर्भवेदरचतुष्टयम् ॥११॥
परितः कल्पयेन्नेमिं वैष्णवं तु षडक्षरम् ।
शक्तितारर[5]माबीजैर्ग्रथितं [6]वर्मवेष्टितम् ॥१२॥

---

1. श्रियो D.
2. द्वारमालिखेत् D.
3. प्रधानादि° D.
4. इदमर्धं न दृश्यते A B C E F.
5. °बीजग्रथितम् D.
6. चर्म° A B C E F.

शक्तितारमाश्चैव परितस्त्रिस्त्रिरालिखेत् ।
फट्कारशक्तितारश्रीग्रथितां मातृकां पुनः ॥१३॥
प्रधिभूमौ लिखेच्चक्रमेतच्चतुररं स्मृतम् ।

(अथ षडरविष्णुचक्रम्)

तारकात्मकमेतत्तु चक्रमक्षं प्रकल्पयेत् ॥१४॥
ताराशक्तिरमाबीजैर्ग्रथितं मन्त्रनायकम् ।
परितो विलिखेच्चक्रं पूर्वमक्षीकृतं हि[1] यत् ॥१५॥
नामवर्णान्लिखेद्बाह्ये तारादित्रयद[2]र्भितान् ।
वैष्णवेन षडर्णेन ग्रथितं मन्त्रनायकम् ॥१६॥
परितो विलिखेद्बाह्ये तद्बाहिः सहद[3]र्भिताम् ।
मातृकां विलिखेत्सर्वमिदमक्षं विचिन्तयेत् ॥१७॥
वैष्णवेन षडर्णेन शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्त्राकारं परमाद्भुतम् ॥१८॥
स्त्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
रेफं च [4]प्रणवं रेफं प्रणवं शक्तिमेव च ॥१९॥
रेफं च प्रणवं पश्चाच्छ्रियं पश्चान्महामुने ।
रेफं चेति लिखेत्पूर्वमरं कालानलद्युतिम् ॥२०॥

---

1. स्मरेत् A B C E F.
2. गर्भितम् A B C E F.
3. ०गर्भिताम् B C.
4. प्रणवो रेफं शक्तिं देहं तथो (?) श्रियौ D.

प्रणवालोलितं मन्त्रमाग्नेयमरमालिखेत् ।
रेफं विं प्रणवं रेफं विं शक्तिं रेफमेव च ॥२१॥
विं श्रियं रेफमित्येवं दक्षिणं चारमालिखेत् ।
रेफं ष्णं प्रणवं रेफं ष्णं शक्तिं रेफमेव च ॥२२॥
ष्णं [1][श्रियं रेफमित्येवं नैर्ऋतं चाप्यरं लिखेत् ।
रेफं वें प्रणवं रेफं वें शक्तिं रेफमेव च ॥२३॥
वें श्रियं] रेफमित्येवं वारुणं चाप्यरं लिखेत् ।
रेफं नं प्रणवं रेफं नं शक्तिं रेफमेव च ॥२४॥
नं श्रियं रेफमित्येवं वायव्यं चारमालिखेत् ।
[2]रेफं मों प्रणवं [2]रेफं मों शक्तिं रेफमेव च ॥२५॥
मों श्रियं रेफमित्येवमै[3]शानं चाप्यरं लिखेत् ।
तत्तदक्षर[4]संदिष्टं मन्त्रं तत्पार्श्वयोर्लिखेत् ॥२६॥
दशाक्षराण्यराणि स्युः प्रत्येकं षडिमानि तु ।
इयं हि षडरी दिव्या देवैरपि सुपूजिता ॥२७॥
परितो विलिखेन्नेमिं मन्त्रमष्टाक्षरं बुधः ।
हुंकारं विलिखेन्नेमिं शक्तिश्रीतारलोलितम् ॥२८॥
शक्तितारमास्त्रिस्त्रिरालिखेत्परितो बहिः ।
फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ॥

1. कुण्डलितो ग्रन्थः न दृश्यते D.
2. रेफमोम् A B C.
3. ॰मीशानम् A B C E F.
4. संदृब्धं D.

एतत्तु षडरं चक्रं षड्विंशार्णविनिर्मितम्[1] ।

(अथाष्टारनारायणचक्रम्)

षडरं कल्पयेच्चक्रमक्षमेतन्महाद्युति[2] ॥३०॥
अष्टाक्षरेण मन्त्रेण चक्रमष्टारमालिखेत् ।
महाबलं महाभीमं[3] कालानलसमद्युति[4] ॥३१॥
विधानमस्य चक्रस्य यथावदवधारय ।
विलिखेत्परितो मन्त्रं तारादित्रयलोलितम् ॥३२॥
नामवर्णान्लिखेद्बाह्ये तारादित्रयलोलितान् ।
अष्टाक्षरेण मन्त्रेण ग्रथितं मन्त्रनायकम् ॥३३॥
परितो विलिखेद्बाह्ये तद्बहिः सहृदर्भिताम् ।
मातृकां विलिखेत्सर्वमिदमक्षं विचिन्तयेत् ॥३४॥
अष्टाक्षरेण मन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्त्राकारं परमाद्भुतम् ॥३५॥
स्त्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा बहिरष्टाक्षरं लिखेत् ॥३६॥
रेफं च प्रणवं तारं रेफं तारं च तारिकाम् ।
रेफं तारं श्रियं चैव रं चेति प्रागरं लिखेत् ॥३७॥

---

1. षड्विंष्णवर्ण° D.
2. °तं महामुने B C E F.
3. महावीर्यम् B.
4. °समप्रभम् B.

रेफं नं तारकं रेफं नं शक्तिं रेफनौ तथा ।
श्रियं रेफमिति प्राज्ञोऽप्याग्नेयं कल्पयेदरम् ॥३८॥
[1]रेफं मों तारकं [1]रेफं मों शक्तिं रेफमोंद्वयम् ।
श्रियं रेफं च मतिमानरं याम्यं क्रमाल्लिखेत् ॥
रेफं नां तारकं रेफं नां शक्तिं रेफमेव च ।
नां श्रियं रेफमित्येवं नैर्ऋतं च लिखेदरम् ॥४०॥
रेफं रां तारकं रेफं रां शक्तिं रेफमेव च ।
रां श्रियं रेफमित्येवं वारुणं च लिखेदरम् ॥४१॥
रेफं [2]यं तारकं रेफं यं शक्तिं रेफमेव च ।
यं श्रियं रेफमित्येवं वायव्यं च लिखेदरम् ॥४२॥
रेफं णां तारकं रेफं णां शक्तिं रेफमेव च ।
णां श्रियं रेफमित्येवं कौबेरं च लिखेदरम् ॥४३॥
रेफं यं तारकं रेफं यं शक्तिं रेफमेव च ।
यं श्रियं रेफमित्येवमैशानं च लिखेदरम् ॥४४॥
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ।
[3]अष्टारीयं महापुण्या सुरासुरनमस्कृता ॥४५॥
परितः कल्पयेन्नेमिं द्वादशाक्षरमद्भुतम् ।
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ॥४६॥

---

1. रेफमोम् A.
2. राम् A B C.
3. अष्टाक्षरी A B C E F.

शक्तितारमास्त्रिस्त्रिः [1]परितो बहिरालिखेत् ।
[2]फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ॥
नारायणं महाचक्रमेतन्नारायणेरितम् ।
अक्षं कृत्वा चक्रमेतद्द्वादशारं बहिर्लिखेत् ।
वासुदेवं महाचक्रं विधिं तस्य निशामय ॥४८॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

मन्त्रमयरक्षानिरूपणं नाम द्वाविंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १३०४)

1. आलिखेत्परितो बहिः D.
2. फट्कारेत्याद्यर्धत्रयं न दृश्यते A B C E F.

ओम् ।

## अथ वासुदेवादियन्त्रनिरूपणं नाम त्रयोविंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(अथ द्वादशारचक्रम्)

अहिर्बुध्न्यः ।

द्वादशारस्य चक्रस्य क्रमोऽयं परिगीयते ।
पाप्मानो विप्रद्रूयन्ते यस्य स्मरणमात्रतः ॥१॥
नारायणाह्वयं चक्रं यत्पूर्वं समुदीरितम् ।
तदक्षं कल्पयेन्मन्त्री वक्ष्यमाणविधानतः ॥२॥
तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
[1]परितो विलिखेद्बाह्ये चक्रान्नारायणाह्वयात् ॥३॥
[2]नामवर्णान्लिखेद्बाह्ये तारादित्रयलोलितान् ।
द्वादशाक्षरमन्त्रेण ग्रथितं मन्त्रनायकम् ॥४॥

---

1. इदमर्धं A B C पुस्तकेषु न दृश्यते.
2. श्लोकोऽयं न दृश्यते B C.

परितो विलिखेद्बाह्ये तद्बहिः सहदर्भिताम् ।
मातृकां विलिखेत्सर्वमेतदक्षं विचिन्तयेत् ॥५॥
द्वादशाक्षरमन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितां कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ॥६॥
स्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा द्वादशाराण्यथो लिखेत् ॥
दिक्षु द्वे द्वे अरे लिख्याद्विदिक्ष्वेकैकमप्युत ।
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारिके ॥८॥
रेफं मन्त्रार्णलक्ष्म्यौ च रेफमित्यनया[1] दिशा ।
अराणि द्वादशैवं च द्वादशाक्षरविद्यया ॥९॥
प्रागादीशानपर्यन्तं कल्पयेन्मन्त्रवित्तमः ।
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ॥१०॥
द्वादशारी महाविद्या सेयं सर्वेश्वरप्रिया ।
परितः कल्पयेन्नेमिं जितंताख्यमहामनुम् ॥११॥
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ।
शक्तितारमास्त्रिस्त्रिरालिखेत्परितो बहिः ॥१२॥
फट्कारग्रथितां बाह्ये मातृकां प्राधिमालिखेत् ।
वासुदेवाह्वयं चक्रमेतद्देवैरभिष्टुतम्[2] ॥१३॥
अस्य चक्रस्य माहात्म्यं वक्तुं शक्यं न मादृशैः ।

---

1. ॰त्याऽनिशम् B C.
2. ॰रनुष्ठितम् B C E F.

(अथ अजिताख्यद्वात्रिंशदरचक्रम्)

अक्षं कृत्वा चक्रमेतद्द्वात्रिंशदरमालिखेत् ॥१४॥
अजिताख्यमिदं चक्रं सुरासुरनमस्कृतम् ।
अस्य चक्रस्य विधिवद्विधानमुपदिश्यते ॥१५॥
वासुदेवाह्वयं चक्रमस्याक्षं[1] परिकल्पयेत् ।
यथा तथा विधानेन विधानं शृणु सांप्रतम् ॥१६॥
तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
परितो विलिखेन्मन्त्री वासुदेवाह्वयाद्बहिः ॥१७॥
तारादिग्रथितान्साध्यनामवर्णान्लिखेद्बहिः ।
जितंताग्रथितं मन्त्रं परितो बहिरालिखेत् ॥१८॥
मातृकां विलिखेद्बाह्ये सहद्वन्द्व[2]विदर्भिताम् ।
विद्यादजितचक्रस्य सम्यगक्षमिदं बुधः ॥१९॥
जितंताख्येन मन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं[3] स्त्राकारं परमाद्भुतम् ॥२०॥
स्त्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा पुण्डरीकाक्षसंमता ॥२१॥
द्वात्रिंशतमराण्यस्य परितो नाभिमालिखेत् ।
दिक्षु चत्वारि चत्वारि लिखेदष्टसु वै क्रमात् ॥

1. मन्त्रमस्याक्षम् E.
2. सहद्वय° D.
3. कर्षयेन्नाभिः D.

रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारिके ।
रेफं मन्त्रार्णलक्ष्यौ च रेफमित्यनया दिशा ॥२३॥
द्वात्रिंशतमराण्येवं लिखेत्सम्यग्जितंतया ।
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ॥२४॥
सा द्वात्रिंशदरी दिव्या देवदेवजयप्रदा ।
परितः कल्पयेन्नेमिं नृसिंहानुष्टुभं पराम् ॥२५॥
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ।
शक्तितारमाभिस्त्रिभिः परितो बहिरालिखेत् ॥२६॥
[illegible]थितां बाह्ये मातृकां प्रधिमालिखेत् ।
अजिताख्यमिदं चक्रं पुण्डरीकाक्षसंमतम् ॥२७॥
[1]येनाद्य पुण्डरीकाक्षो दैत्यान्विजयतेऽखिलान् ।
एतदत्यद्भुतं चक्रं कथ्यते वैष्णवं यशः ॥२८॥
नित्ययुक्तोऽत्र सन्मन्त्री जगद्विजयतेऽखिलम् ।

(अथ नारसिंहद्वात्रिंशदरचक्रम्)

अक्षीकृत्यैतच्चक्रं तु चक्रमन्यत्प्रवर्तते ॥२९॥
महाविष्णुमयं घोरं भद्रं मृत्युविमर्दनम् ।
विधानं शृणु तस्येदं कथ्यमानं मयाऽनघ ॥३०॥
तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
अजिताख्यान्महाचक्रात्परितो बहिरालिखेत् ॥३१॥

---

1. येनाद्यः B C E F.

तारादिग्रथितान्साध्यनामवर्णान्बहिर्लिखेत् ।
उग्रवीरादिमन्त्रेण ग्रथितं मन्त्रनायकम् ॥३२॥
परितो विलिखेद्बाह्ये सहग्रथितमातृकम्[1] ।
महाविष्णुमयं[2] ह्येतदक्षं चक्रस्य शोभनम् ॥३३॥
उग्रवीरादिमन्त्रेण शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्राकारं परमाद्भुतम् ॥३४॥
स्राकारग्रथितां चापि मातृकां परितो लिखेत् ।
एषा नाभिः समुद्दिष्टा महाविष्णुमयी परा ॥३५॥
द्वात्रिंशतमराण्यस्य परितो नाभिमालिखेत् ।
दिक्षु चत्वारि चत्वारि लिखेदष्टसु वै क्रमात् ॥
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारके ।
रेफं मन्त्रार्णलक्ष्म्यौ च रेफमित्यनया दिशा ॥३७॥
द्वात्रिंशतमराण्येवं नृसिंह्मानुष्टुभां[3] लिखेत् ।
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ॥३८॥
सा द्वात्रिंशदरी विद्या[4] दुष्टदैत्यनिबर्हणी ।
अस्य चक्रस्य नेमिं तु त्रीणि छन्दांसि कल्पयेत् ॥
गायत्रीं त्रिष्टुभं चैव तथाऽनुष्टुभमेव च ।
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ॥४०॥

1. ०मातृकामिति सर्वत्र.
2. ०मयस्यैतदक्षं B C E F.
3. ०भम् B C.
4. दिव्या E F.

शक्तितारमाखिस्त्रिः परितो बहिरालिखेत् ।
फट्कारग्रथितां बाह्ये मातृकां प्रधिमालिखेत् ॥
एतदत्यद्भुतं घोरं दुष्टदानवसूदनम् ।
नारसिंह्मं महाचक्रं मृत्युञ्जयमिति श्रुतम् ॥४३॥
प्रेतापस्मारकूश्माण्डदैत्यदानवराक्षसाः ।
डाकिन्यो भूतयोगिन्यो याश्चान्याः क्रूरजातयः ॥
स्मरणादस्य चक्रस्य विनश्यन्त्येव सर्वदा ।

(अथ शतारज्योतिश्चक्रम्)

अक्षीकृत्यैतच्चक्रं तु ज्योतिश्चक्रं प्रवर्तते ॥४४॥
ज्योतींषि त्रीणि छन्दांसि गायत्र्यादीन्यसंशयम् ।
विधिज्ञैस्तस्य चक्रस्य विधानं विहितं शृणु ॥४५॥
यदेतत्प्रथितं ज्योतिर्दिवि प्रत्यक्षमुत्तमम् ।
एषा तदिति गायत्री [1]वेदानां जननी परा ॥४६॥
यदेतदग्नि[2]होत्रस्थं ज्योतिर्वहति वै हुतम् ।
जातवेदस इत्येषा त्रिष्टुबग्निमयी तनुः ॥४७॥
रसैः पुष्णाति यद्विश्वं ज्योतिर्नयननन्दनम् ।
तत्त्रियम्बकमित्येषाऽनुष्टुबिन्दुमयी तनुः ॥४८॥
ज्योतिर्भिर्धार्यते विश्वं बोधतापनहर्षणैः ।
विरुद्धोपक्रमैर्विश्वं भोक्तृभोग्यमयात्मभिः ॥४९॥

---

1. देवानाम् D.
2. ॰नेत्रस्थम् D.

यत्पूर्वमुदितं चक्रं महाविष्णुमयं महत्[1] ।
तदक्षं कल्पयेन्मन्त्री त्रिभिर्ज्योतिर्भिरुत्तमैः ॥५०॥
छन्दोभिः कल्पयेदक्षं तारादिग्रथितं पुरा ।
महाविष्णुमयाद्बाह्ये विलिखेन्मन्त्रनायकम् ॥५१॥
तारादिग्रथितांश्चापि साध्यवर्णान्लिखेद्बहिः ।
छन्दोभिर्ग्रथितं मन्त्रं मन्त्री तद्बहिरालिखेत् ॥
मातृकां विलिखेद्बाह्ये सहद्वयविदर्भिताम् ।
एतदक्षं समुद्दिष्टं ज्योतिश्चक्रस्य नारद ॥५३॥
त्रिभिस्तदाद्यैश्छन्दोभिः शक्तिश्रीबीजतारकैः ।
ग्रथितं कल्पयेन्नाभिं स्त्राकारं परमाद्भुतम् ॥५४॥
स्त्राकारग्रथितां चापि मातृकां बहिरालिखेत् ।
एषा नाभिः समुद्दिष्टा वेदवेदान्तपूजिता ॥५५॥
अराणि शतमस्य स्युर्विधानं तस्य[2] मे शृणु ।
वायुतो वह्निपर्यन्तं रक्षसः शर्वगोचरम् ॥५६॥
सूत्रद्वयं पातयित्वा चतुर्धा प्रविभज्य तु ।
अराणि पञ्च पञ्चैव क्षेत्रमेकैकमालिखेत् ॥५७॥
अराणि शतमेवं स्युर्विधानं तस्य मे शृणु ।
गायत्र्यादीनि यानि स्युस्तत्र छन्दस्त्रयं लिखेत् ॥

1. जगत् A.
2. तत्र D.

रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारके ।
रेफं मन्त्रार्णलक्ष्यौ च रेफमित्यनया दिशा ॥५९॥
विलिखेदरगायत्रीं गायत्र्यादौ समाहितः ।
अराणां त्रिष्टुभं चैव त्रिष्टुभैव समालिखेत् ॥६०॥
[1]अनुष्टुभमराणां चानुष्टुभैव समालिखेत् ।
प्रागादिक्रमयोगेन यावदीशानगोचरम् ॥६१॥
तत्तदक्षरसंयुक्तं मन्त्रं चाप्यरपार्श्वयोः ।
शतारीयं महापुण्या सा ब्रह्मास्त्रमयी परा ॥६२॥
पादैः पदैरक्षरैश्च त्रिधैव प्रतिलोमया ।
ब्रह्मदण्डब्रह्मशिरोब्रह्मास्त्रमय[2]तेजसा ॥६३॥
आन्तरं नेमिभागं तु गायत्र्या कल्पयेत्सुधीः ।
आग्नेयास्त्रस्वरूपिण्या त्रिष्टुभा प्रतिलोमया ॥६४॥
मध्यमं नेमिभागं तु कल्पयेन्मन्त्रवित्तमः ।
अनुष्टुभा तृतीयं तु नेमिभागं प्रकल्पयेत् ॥६५॥
त्रैय्यंबकास्त्ररूपिण्या वर्णशः प्रतिलोमया ।
विलिखेत्प्रतिलोमास्ता मन्त्रेण ग्रथिताः सुधीः ॥
तारतारानुताराभिर्ग्रथितं हुं बहिर्लिखेत् ।
शक्तितारमास्त्रिस्त्रिः परितो बहिरालिखेत् ॥६७॥

1. इदमर्धं न दृश्यते A B C E F.
2. °तेजसः D.

[illegible]थितां बाह्ये मातृकां प्रधिमालिखेत् ।
त्रिषु लोकेषु विख्यातं त्रिज्योतिश्चक्रमुत्तमम्[1] ॥
नानाऽस्त्रग्रामसंभिन्नं ब्रह्मज्योतिरनामयम् ।

(अथ ब्रह्मचक्रम्)

अस्माच्चक्राद्बहिः पञ्चहोतारः सग्रहाः[2] स्मृताः ॥
संभाराः पत्तयश्चैव[3] दक्षिणा हृदयाणि च ।
तद्बहिः शतरुद्राणि पञ्चब्रह्माणि तद्बहिः ॥७०॥
त्वरितां[4] तद्बहिश्चैव सूक्तं पौरुषमेव च ।
श्रीसूक्तं तद्बहिश्चैव गायत्रीं व्याहृतित्रयम् ॥७१॥
प्रणवं चेति परितः पङ्क्तीरेताः[5] क्रमाल्लिखेत् ।
एतद्ब्रह्ममयं चक्रं सर्वछन्दोविनिर्मितम्[6] ॥७२॥
सर्वदुःखोपशमनं सर्वपापनिबर्हणम् ।
स्मृतिमात्रेण सर्वेषामभीष्टार्थप्रदं सदा ॥७३॥

(अथ सहस्रारमातृकाचक्रम्)

बहिः प्रवर्तते चास्मान्मातृकाचक्रमुत्तमम् ।
सोमसूर्याग्निबिन्दूनां[7] कूटं तु परितो लिखेत् ॥७४॥

---

1. °मद्भुतम् E F.
2. सग्रहाः A; संग्रहाः B C.
3. पत्नयश्चैव D E.
4. त्वरिताः B C E F.
5. पङ्क्तीरेखाः E; पङ्क्तिरेखाः B C.
6. °विनिर्जितम् D.
7. सोमसूर्येन्दुवह्नीनाम् E.

तारतारानुताराभिर्ग्रथितं मन्त्रनायकम् ।
तद्बहिर्विलिखेन्मन्त्री तारादिग्रथितान्पुनः ॥७५॥
नामवर्णान्लिखेद्बाह्ये [1]तद्बहिर्मन्त्रमिश्रितान् ।
मातृकां विलिखेद्बाह्ये सहग्रथितमातृकाम् ॥७६॥
एतदक्षं समुद्दिष्टं मातृकाचक्रसंभवम् ।
तारतारानुताराभिर्वर्णमातृकयाऽपि च ॥७७॥
ग्रथितं [2]कल्पयेन्नाभिं स्त्राकारं परमाद्भुतम् ।
स्त्राकारग्रथितां चापि मातृकां बहिरालिखेत् ॥
एषा नाभिः समुद्दिष्टा शब्दब्रह्ममयी परा ।
अराण्यस्य सहस्रं [3]स्युंस्तद्विधानमिदं शृणु ॥७९॥
पूर्वादिषु विभक्तेषु सूत्रैः क्षेत्रेषु पूर्ववत् ।
पञ्च पञ्चाशतं कुर्यादराणि [4]प्रतिभागशः ॥८०॥
पञ्चाशद्भिस्तु विंशत्या सहस्रारं भवेत्तलम् ।
तारतारानुताराभिर्वाग्भवाद्यैस्त्रिभिस्तथा ॥८१॥
चतुर्भिर्मातृकाबीजैराद्यैरौर्वान्तिमैः स्वरैः ।
आदिद्विसप्तसंभिन्नैः काद्यैः क्षान्तैश्च वर्णकैः ॥

1. °तद्बहिर्मातृकां श्रिताम् B C E F.
2. मन्त्रयेन्नाभिम् D.
3. स्यात् D.
4. प्रवि° A B C.

त्रैलोक्यैश्वर्यदोपेतैः शतैः[1] पञ्चभिरक्षरैः ।
तावद्भिश्चैव सृष्टघन्तैः सहस्रेणोति संहतैः[2] ॥८३॥
अराणि कल्पयेदेवं सहस्रं तद्विधिं शृणु ।
रेफं मन्त्राक्षरं तारं रेफं मन्त्रार्णतारके ॥८४॥
रेफं मन्त्रार्णलक्ष्यौ च रेफमित्यनया दिशा ।
प्रागादिक्रमयोगेन लिखेदरसहस्रकम् ॥८५॥
सहस्रारीयमुद्दिष्टा शब्दब्रह्ममयी परा ।
ऐश्वर्यं बिन्दुसंयुक्तं वाग्भवं संप्रचक्षते ॥८६॥
करालविबुधाख्यस्था माया व्यापिसमन्विता ।
कामराजमयं बीजं [3]सोमौर्वव्यापिसंयुता ॥८७॥
[4]बीजं सारस्वतमिदं वाग्भवाद्या इमे त्रयः ।
कालानलस्थकमलभास्करानि[5]लगामिनी ॥८८॥
माया [6]व्यापिसमायुक्ता मातृका बीजमादिमम् ।
अशेषभुवनाधारसूर्यानलविहारिणी ॥८९॥
पञ्चबिन्दुर्व्यापियुता द्वितीयं बीजमुच्यते ।
सोमानलस्थ[7]सूक्ष्मस्थानन्दव्यापिसमन्वयः ॥९०॥

---

1. पञ्च पञ्चभिरक्षरैः B C; शनैः पञ्चभिरक्षरैः D.
2. °संहरैः (?) D.
3. सोमोर्वौर्याऽपि संयुता (?) D.
4. सारस्वतमिदं बीजं D.
5. °नलभामिनी E.
6. ब्यादि° D.
7. °सूक्ष्मस्थ आनन्दो व्यापिसंमितम् (?) A B C E F.

तृतीयं बीजमुद्दिष्टं चतुर्थमपि मे शृणु ।
सोमतालाङ्कसूक्ष्मस्थकालपावकगोपना[1][2] ॥९१॥
कूटीकृता व्यापियुता चतुर्थं बीजमुत्तमम् ।
बीजानीमानि चत्वारि मातृकायां महामुने ॥९२॥
तत्तदक्षरसंयुक्तं मन्त्रं चोभयपार्श्वयोः ।
अराणां विलिखेन्मन्त्री सहस्रारविधिक्रमे ॥९३॥
मन्त्रार्णग्रथितां मन्त्री मातृकां प्रतिलोमिकाम् ।
विलिखेत्परितो मन्त्री तारादिग्रथितं च हुम् ।
बहिर्लिखेच्छक्तितारमास्त्रिस्त्रिर्विचक्षणः ।
फट्कारग्रथितां चापि मातृकां प्रधिमालिखेत्[3] ।
एतत्तन्मातृकाचक्रं यत्र सर्वं प्रतिष्ठितम् ।
यद्बीजं[4] मातृकाक्षाद्यं तद्बहिः प्रधिमालिखेत् ॥९६॥
ततश्चिन्तामणिं बाह्ये तद्बहिश्च लिखेत्पराम् ।
परावरां तद्बहिश्च तद्बहिः श्रियमालिखेत् ॥९७॥
तद्बहिस्तारिकां चैव तद्बहिस्तारकं परम् ।
तद्बहिश्चाङ्कुशांस्त्रिस्त्रिः पाशांस्त्रिस्त्रिश्च तद्बहिः ॥९८॥

---

1. ०कायान्त० D.
2. गोपनाः A B C E F.
3. बहिरालिखेत् D.
4. यं बीजम् D.

[1]आचक्रादीनि चाङ्गानि तद्बहिः परितो लिखेत् ।
तद्बहिश्चापि दिग्बन्धं तस्य रूपमिदं शृणु ॥९९॥
पुरुषाय ततः स्वाहा दिङ्नामामर्षणं ततः ।
[2]सहेति च ततः पश्चाद्बन्धयामीति दिग्गतम् ॥
आत्मने च ततः स्वाहा विदिङ्नामाप्यमर्षणम् ।
सहेति च ततः पश्चाद्बन्धयामि विदिग्गतम् ॥
विलिखेच्चक्रगायत्रीमग्नि[3]प्राकारमन्ततः ।
आकाशमण्डलं बाह्ये तद्बीजेन समन्वितम् ॥१०२॥
[4]वायुबीजं तु तद्बाह्ये स्वबीजेन समन्वितम् ।
[5]वह्निबीजं तु तद्बाह्ये स्वबीजेन समन्वितम् ॥१०३॥
आप्यं तु मण्डलं बाह्ये स्वबीजेन समन्वितम् ।
तद्बाह्ये पार्थिवं बिम्बं स्वबीजेन समन्वितम् ॥१०४॥
प्राणः सूक्ष्मो[6]ऽनलश्चैव वारुणः पुरुषेश्वरः ।
सव्यापिनः क्रमादेतद्व्योमादेर्बीजपञ्चकम् ॥१०५॥
अनलः कमलश्चैव भास्करो मर्दनस्तथा ।
अनलः सूक्ष्म और्वश्चाप्यूर्जः पिण्डीकृता इमे ॥

---

1. अचक्रादीनि D.
2. सद्येति D.
3. °प्राकारकं D.
4. वायुर्बीजं तु D; वायुबिम्बं तु B C E F.
5. इदमर्धं न दृश्यते D.
6. °ऽनिलश्चैव D.

सव्यापिनः स्मृतं बीजं चिन्तामणिरिदं परम् ।
परा नाम महाविद्या सोमस्थौर्वस्थसप्तर्षिका ॥
सव्यापी सोमगो विष्णुरियं प्रोक्ता परावरा ।
सौदर्शनेन कूटेन पृथिवीं परिवेष्टयेत् ॥१०८॥
[1]योनिं सुदर्शनस्याथ वेष्टयेत्तारया बहिः ।
सोमः सूर्यस्ततः सोमः कालपावकयोर्द्वयम् ॥
सौदर्शनमिदं कूटं निरचां पञ्चकं हलाम् ।
एतत्सौदर्शनं रूपं कालानलसमद्युति ॥११०॥
शमयेत्कूटमेतद्वै तारयाऽमृतरूपया ।
अग्नीषोमात्मकं चक्रमेतत्ते दर्शितं मुने ।
वैष्णवं परमं तेजो [2]ध्याहि चक्रमिदं सदा ॥१११॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

वासुदेवादियन्त्रनिरूपणं नाम त्रयोविंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १४१५)

---

1. योन्या D.
2. व्यापि D.

ओम् ।

## अथ यन्त्रदेवताध्याननिरूपणं नाम चतुर्विंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(उक्तानामष्टानां चक्राणां संक्षेपेण फलकथनम्)

अहिर्बुध्न्यः ।

सोमसूर्यदहनप्रभोज्ज्वलं
चक्रमेतदुदितं महामुने ।
वाङ्मयं सकलमन्त्रसंमितं
शब्दशब्द्यमखिलं यदुद्गतम् ॥१॥

ब्रह्मचक्रमुदितं यदान्तरं
केवलं [1]विमलधीप्रदं मुने ।
विष्णुचक्रमुदितं यदद्भुतं
[2]व्याप्तिकान्तिमतिविक्रमप्रदम् ॥२॥

1. सकल° A B C E F.
2. व्यक्ति° E.

यत्तृतीयमुदितं महाद्भुतम्
चक्रमुज्ज्वलयशोऽर्थदं तु तत् ।
यत्तु चक्रमुदितं तुरीयकं
मोक्षदं मुनिगणोदितं मुने ॥३॥
पञ्चमं विजयदायि कीर्तिदं
षष्ठमुग्रगदमृत्युनाशनम् ।
ब्रह्मवर्चसविधायि सप्तमं
संपदर्थविजयार्थमष्टमम् ॥४॥

(विस्तरेण तन्महिमवर्णनस्याशक्यत्वम्)

एकैकशोऽल्पश इदं गदितं फलं ते
चक्राष्टके सकलयोगिमुनीन्द्रवन्द्ये ।
वर्षायुतैर्बहुभिरप्यखिलात्मकस्य
शक्या न विस्तृतिरमुष्य मयाऽभिधातुम् ॥
मन्त्राक्षरप्रथितभावविभेदपूर्वं
मन्त्री यजेत[1] विधिवन्मनुदेवतास्ताः ।
आकारशक्तिपरिवारविभूषणास्त्र-[2]
वीर्यप्रभावविषयैश्च [3]विचिन्तयेत्ताः ॥६॥

1. यथेह A B C F; यथैव E.
2. विभूषणार्थ° A B C E F.
3. विचिन्तयेत्ताम् E.

(तत्तच्चक्रदेवतास्वरूपतद्ध्यानादिप्रपञ्चनम्)

आद्यं निरञ्जनमशेषजगत्प्रसूति-
त्राणप्रमाथनियमोद्यदनुग्रहस्थम् ।
संपूर्णशक्तिमतरङ्गमहार्णवाभं
ध्यायेद्धरिं प्रणवगोचरमादिचक्रे ॥७॥

श्वेतं प्रसन्नवदनं कमलायताक्षं
पीताम्बरं पृथुलवक्षसमात्मयोनिम् ।
पीनोरुदीर्घभुजबृन्दधृतारिशङ्ख-
कौमोदकीसरसिजं खलु विष्णुचक्रे ॥८॥

श्यामं किरीटिनमुदारचतुर्भुजस्थ-
कौमोदकीकमलवारिजवर्यचक्रम् ।
नारायणं नयननन्दनमादिदेवं
ध्यायेच्छ्रिया सह तृतीयपदस्थचक्रे ॥९॥

कुन्देन्दुगौरमरविन्ददलायताक्षं
शुद्धाक्षमालममलोद्यतबोधमुद्रम् ।
बाहुद्वयीविधृतचक्रविशुद्धशङ्खं
तं वासुदेवमिति चिन्तय तुर्यचक्रे ॥१०॥

शङ्खारिपङ्कजगदाङ्कुशपाशशार्ङ्ग-
सौनन्दकान्दधतमष्टभिरुग्रहस्तैः ।
तार्क्ष्यस्थितं रजतशैलनिभं पुराणं
संचिन्तयेदजितचक्रगतं पुमांसम् ॥११॥

क्रूरोग्रवक्रनखकोटिनिकृत्तदैत्य-
वक्षःस्थलोच्चलितशोणितदिग्धदेहम्[1] ।
घोरप्रकारनयनत्रयदुर्निरीक्षं
षष्ठे विचिन्तय मुने नरसिंहमीशम् ॥१२॥
सोमाग्निसूर्यकिरणोद्गमपुञ्जकुञ्ज-
मध्यस्थितं विधृतपद्मगदारिशङ्खम् ।
छन्दःस्थितं भुवनकारणमप्रमेयं
श्रीशं विचिन्तय मुने पुरुषं पुराणम् ॥१३॥

(मातृकाचक्रे लक्ष्म्या ध्येयत्वम्)

गोक्षीरशङ्खहिमदीधितिदेवसिन्धु-
कुन्दप्रभाविमलपङ्कजशङ्खहस्ता ।
स्मेरप्रसन्नवदना कमलायताक्षी
ध्येया [2]स्वचक्रभवनोपरि [3]मातृका सा ॥१४॥
आलोलशूलदशकं त्रियुगाधिकं स्वै-
र्हस्तैर्द्विरष्टभिरथो दधती जपाभा ।
चिन्तामणिस्थितिमती नयनत्रयाढ्या
शक्तिर्हरेरिति मुने मनसा विचिन्त्या ॥१५॥

---

1. °दैत्यम् A B C E F.
2. सचक्र° B C E F.
3. मातृकाख्या A B C E F.

पूर्णेन्दुशीतलरुचिर्धृतबोधमुद्रा
बाह्वन्तरस्थनिजबोधनपुस्तकाढ्या ।
देवी परा परमपूरुषदिव्यशक्तिः
चिन्त्या प्रसन्नवदना सरसीरुहाक्षी ॥१६॥
पद्मारुणाभयवराङ्कुशपाशहस्ता
रक्ताम्बरा विपुलवारिजपत्रनेत्रा ।
सूक्ष्मप्रभास्थितपरावरतत्त्वजाता
चिन्त्याऽऽदिशक्तिर[1]पि सा च परावराख्या ॥
बाहुस्थपाशवलिताखिलजीववर्गा
बन्धूकपद्मकुसुमारुणदेहकान्तिः ।
पीनस्तनी मदविघूर्णितनेत्रपद्मा
लक्ष्मीशपार्श्वनिलयाऽखिलदेवतेयम् ॥१८॥
[2]वक्राग्रना[3]सि निशिताङ्कुशकीलितेन
[4]नम्रेण जीवनिकरेण समीड्यमाना ।
दिव्याङ्कुशास्थितिमती हरिशक्तिराद्या
ध्येया समाधिनिरतेन [5]महाप्रभावा ॥१९॥

1. °रिति सापि D.
2. वक्त्राग्र° A.
3. °नास° D.
4. नेत्रेण B C; नक्रेण A.
5. महानुभावा D.

(अङ्गमन्त्रदेवतातद्ध्यानादिप्रपञ्चनम्)

अङ्गं तु चक्रमयदेवसमानरूप-
माचक्रपूर्वमखिलं गदितं यदादौ ।
गायत्र्यपि ज्वलितपावकतुल्यवर्णा
चक्रेशतुल्यविभवा विपुलस्तनाढ्या ॥२०॥
ज्वालाकुलद्रुतसमस्तसुरारिवर्गं
प्राकारमग्निमयमेव वदन्ति सन्तः ।
व्योमस्थशक्तिरपि सूर्यसहस्रमाला
[1]नीलाम्बुजद्युतिमती मनसा विचिन्त्या ॥
मालां चतुर्गतिमयीं वपुषा दधाना
वायुस्थशक्तिरपि धूम्रतनुर्विचिन्त्या ।
कालानलाख्यतरुणार्कसहस्रमाला
तेजःस्थशक्तिरपि रक्ततनुर्विचिन्त्या ॥२२॥
पीयूषरूपरचना सलिलस्थशक्ति-
र्ध्येया [2]वराहनियुतायुतकॢप्तमाला ।
उत्तप्तकाञ्चनरुचिः पुरुषेश्वराढ्या
भूशक्तिरादिपुरुषस्य विचिन्तनीया ॥२३॥

---

1. इत आरभ्य पादचतुष्टयं प्रभ्रष्टम् B C.
2. पराह° A ; परा वि° D.

(सुदर्शनमयसर्वचक्रकूटध्यानम्)

कालानलायुतसहस्रसमानरूपं
कूटं सुदर्शनमयं मनसा विचिन्त्यम् ।
तापातुरक्वथदशेषसुरारिमेदो-
निष्यन्दमेदुरितदीप्तिशिखाजटालम् ॥२४॥

(सौदर्शनसर्वमन्त्रमूलभूतशक्तिध्यानम्)

सूर्येन्दुवह्निनयना तरुणार्कवर्णा
व्याप्य स्थिता जगदशेषमशेषवन्द्या ।
चक्राणि बाहुनि[1]वहैर्दधती सहस्रं
[2]योनिः सुदर्शनमनोरिति चिन्तनीया ॥२५॥

(उक्तेषु यन्त्रेषु द्विजस्यैवाधिकारः)

लेशतो गदितमेतदुदारं
रक्षणं सकललोकहिताय ।
भूपतेरनुमतो द्विजवर्यो
भावयेदनिशमे[3]तदतन्द्री ॥२६॥

(उक्तयन्त्राणामानुषङ्गिकफलपूर्वकं मुक्तिरूपपरमफलसाधनत्वम्)

नाद्रवन्ति दुरितानि कदाचि-
द्विद्रवन्ति निखिला ग्रहरोगाः ।

---

1. °निधनै° D.
2. विष्णुस्सु° D.
3. °मेव तु मन्त्री A B C E F.

वर्धन्ते वसुमती बहुसस्या
न त्रिवर्गविहतिर्मनुजानाम् ॥२७॥
धर्मार्थकामबहुलाश्चिरजीविनश्च
हीनाश्च पाप्मभिरुदारयशःप्रतापाः ।
आराध्य शास्त्रनिरता विहितक्रियाभि-
रन्ते विशन्ति [1]विमलाः परमं पुमांसम् ॥

(सौदर्शनमन्त्रेष्वभिक्रमनाशाद्यभावः)

दिव्यो विधिः कथित एष मुने समस्तो
विप्रैर्नृपैर्धृतसमाधिभिरत्र भाव्यम् ।
अस्मिन्समाधिविरही ललितक्रियोऽपि
[2]यत्नोचितं लभत एव फलं मनुष्यः ॥२९॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
यन्त्रदेवताध्याननिरूपणं नाम चतुर्विंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १४४४)

---

1. विमलम् A D E F.
2. दत्तोचितं (?) A B C.

ओम् ।

## अथ सुदर्शनयन्त्रवैभववर्णनं नाम पञ्चविंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(यन्त्रवैभवं प्रदर्शयितुमुक्तार्थानुवादः)

श्रीनारदः ।

भगवन्सम्यगाख्यातं विस्तरेण यथातथम्[1] ।
यत्कारणं यदाधारं यत्प्रमाणमिदं जगत् ॥१॥
तथा धर्मार्थकामानां स्वरूपं साधनं[2] तथा ।
पराविद्या तथा विद्या तथा चाध्यात्मसंज्ञिता ॥२॥
मुक्तिश्च परमा प्रोक्ता बन्धस्तत्साधनं[3] तथा ।
वर्णाश्रमविभागश्च तद्धर्माश्च विशेषतः ॥३॥
सर्वेषामेव वर्णानां राज्ञां रक्षाविधिस्तथा ।
राज्ञां तु रक्षणविधिर्दिव्योऽयं वर्णितस्तथा ॥४॥

---

1. यथातथा D.
2. साधनानि च D.
3. °स्तद्भावनम् D.

कथं किल कलौ प्राप्ते राज्ञां रक्षाविधिर्भवेत् ।

(संक्षेपतः कलिस्वरूपकथनम्)

न यक्ष्यन्ति न दास्यन्ति न होष्यन्ति द्विजातयः ॥
न सर्वे स्वेषु धर्मेषु करिष्यन्ति मतिं कलौ ।
शक्तयः सर्वमन्त्राणां प्रयास्यन्ति तिरस्कृतिम् ॥
निर्वीर्याश्च भविष्यन्ति राजानः सत्त्ववर्जिताः ।
निर्धना हृतराज्याश्च दस्युभिः परिपीडिताः ॥७॥
अल्पक्षीरा भविष्यन्ति गावः प्राप्ते कलौ युगे ।
प्रजाः क्षुधार्ताश्च [1]कलावग्रहनिपीडिताः ॥८॥
पाषण्डधर्मनिरता भगवन्तं जनार्दनम्[2] ।
निन्दनादीन्करिष्यन्ति तमःप्राया ह्यवेदिनः ॥९॥

(तादृशे कलौ राज्ञां रक्षाविध्युपायप्रश्नः)

इत्थं दोषास्पदे काले राज्ञां रक्षाविधिः कथम् ।
संपत्स्यते शक्तिहीनैर्द्विजैः सत्त्वविवर्जितैः ॥१०॥
येनोपायेन रक्षा [3]स्यात्तं मे ब्रूहि सुनिश्चितम् ।
सर्वज्ञ त्वदृते वक्तुं कः शक्नोति महेश्वर ॥११॥

---

1. कलौ पापग्रह° B C.
2. जनार्दनं, उद्दिश्येति शेषः.
3. स्यात्तन्मे A B C.

(तत्प्रतिवचनारम्भः)

अहिर्बुध्न्यः ।

साधु साधु यदेतत्त्वं पृष्टवानसि नारद ।
सत्यमेतत्कलौ रक्षाविधिर्मन्त्रैर्न युज्यते ॥१२॥
तथाऽपि भक्त इति ते कथयामि शृणुष्व तम् ।
सर्वेषामेव भूतानां राज्ञां[1] चैव विशेषतः ॥१३॥
रक्षाविधिं परं गुह्यं तन्त्राणां सारमुत्तमम् ।

(अहिर्बुध्न्यस्य स्वकृतपितामहशिरश्छेदमहापापप्रशमाय नारायणात्सुदर्शनयन्त्रप्राप्तिः)

मम नारायणेनोक्तं पुण्ये बदरिकाश्रमे ॥१४॥
पितामहशिरश्छेदमहापातकशान्तये ।
सर्वबाधाप्रशमनं सर्वदुःखनिवारणम् ॥१५॥

(तन्महिमसंक्षेपः)

सर्वसिद्धिप्रदं सर्वसंपदामेककारणम् ।
पराभिचारशमनं परराज्यप्रदं शुभम्[2] ॥१६॥
[3]कलिदोषापहरणं सर्वशत्रुनिबर्हणम् ।
यस्य संस्मरणेनैव नृणां नश्यन्ति शत्रवः ॥१७॥

---

1. राज्ञां रक्षा A B C.
2. शिवम् B C.
3. कलिदोषहरं शान्तम् D.

दस्यवो नष्टविषया विद्रवन्ति दिशो दश ।
यन्त्रं यस्य गृहे न्यस्तं तस्य सर्वं प्रसिध्यति ॥
यो राजा यन्त्रमेतत्तु सादरं कारयेद्गृहे ।
तस्य भूमण्डलं सर्वं भवेद्वश्यं न संशयः ॥१९॥
सौदर्शनस्य यन्त्रस्य माहात्म्यं वर्णितं मया ।

(सुदर्शननारसिंह्मयन्त्रफलप्रदर्शनम्)

सुदर्शनेन युक्तस्य नारसिंह्मस्य यन्त्रकम् ॥२०॥
यः कारयति तस्यान्यो लोको वश्यो भवेदपि ।
एतल्लेखनमात्रेण सर्वं संपद्यते[1] नृणाम् ॥२१॥

(विष्णुपञ्जरयन्त्रफलप्रदर्शनम्)

विष्णुपञ्जरयन्त्रस्य करणेनैव देवताः ।
सर्वाः प्रसीदन्ति सदा किं पुनर्मनुजादयः[2] ॥२२॥

(समुदितयन्त्रत्रयफलस्याशक्यवर्णनत्वम्)

एषां त्रयाणां यन्त्राणां समाहारफलं मया ।
वक्तुं न शक्यते सर्वं सर्वज्ञेनापि नारद ॥२३॥

(महासुदर्शनयन्त्रफलम्)

महासुदर्शनस्येह यन्त्रस्य करणाद्द्विजः ।
त्रैलोक्यं समवाप्नोति किं पुनर्मण्डलं भुवः ॥२४॥

---

1. संपत्स्यते E F.
2. पुनर्मनुजा द्विज D.

एकत्र कल्पितसुदर्शननारसिंह-
मन्यत्र केवलसुदर्शनमुज्ज्वलाङ्गम् ।
संकल्पितोभयमुखं घटितास्त्रजालं
श्रीविष्णुपञ्जरगतं युतमन्त्रजालम् ॥२५॥
माहासुदर्शनमपुण्यकृतां जनाना-
मप्राप्यमाश्रितसुखप्रदमेकयन्त्रम् ।
तेजोमयं सकललोकनमस्कृतं य-
त्तत्कारयेत्सकललोकजयं यदीच्छेत् ॥२६॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम्

सुदर्शनयन्त्रवैभववर्णनं नाम पञ्चविंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १४७०)

ओम् ।

## अथ महासुदर्शनयन्त्रलक्षणं नाम षड्विंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(विस्तरेण महासुदर्शनयन्त्रलक्षणप्रश्नः)

श्रीनारदः ।

विस्तरेणास्य यन्त्रस्य संस्थानं लक्षणं तथा ।
श्रोतुमिच्छामि भगवंस्तन्ममाचक्ष्व पृच्छतः ॥१॥

(तत्प्रतिवचनप्रतिज्ञा)

अहिर्बुध्न्यः ।

विस्तरेण प्रवक्ष्यामि स्वरूपं लक्षणं तथा ।
अस्य यन्त्रस्य देवर्षे तन्मे कथयतः शृणु ॥२॥

(स्वर्णादीनां यन्त्रप्रतिकृत्युपादानत्वम्)

[1]हैमेन राजतेनैव लोहैर्वा शिलयाऽपि वा ।
यथाऽधिकारं यन्त्रस्य कुर्यादर्चां तु साधकः ॥३॥

---

1. राजतेन सुवर्णेन लोहैर्वा A D E F.

(यन्त्रलेखनसाधनद्रव्याणि)

धातुचन्दनकर्पूरकुङ्कुमागुरुजै रसैः ।
सुवर्णसूच्या यदि वा यन्त्रमेतल्लिखेत्पटे[1] ॥४॥

(यन्त्रमध्ये सौदर्शनपुरुषलेखनम्)

चन्द्रमण्डलमध्ये तु तारं कुर्यात्समाहितः ।
तस्य मध्ये लिखेद्देवं[2] रक्तवर्णं सुदर्शनम् ॥५॥

(विस्तरेण तत्स्वरूपवर्णनम्)

पिङ्गाक्षं पिङ्गकेशाढ्यं रक्ताम्बरधरं विभुम् ।
युक्तं षोडशभिर्हस्तैरष्टाभिर्वा महाद्युतिम् ॥६॥
पाशाङ्कुशाब्जमुसलधनुःशङ्खगदाऽरिभिः ।
भीषणैरायुधवरैरुपेतं जयिनां वरम् ॥७॥
तद्विष्णोः परमं रूपं नित्यं तैजसविग्रहम् ।
दंष्ट्रानिष्ठ्यूतसप्तार्चिर्ज्वालापल्लवितानन‍म् ॥८॥
भूषणैर्भूषितं चित्रैर्भीषणं रोमहर्षणम् ।
स्वतेजसा जगत्सर्वं पूरयन्तं महाबलम् ॥९॥
निर्भिद्यमानदैतेयशोणिताशनलम्पटम् ।
उद्यत्प्रद्योतनशतप्रख्यं विख्यातपौरुषम् ॥१०॥

---

1. यन्त्रं तत्कारयेत्पटे D.
2. न्यसेद्देवम् D.

[1]मनस्तत्त्वेन सततं संश्रितं वेगवत्तया ।
नारायणकराम्भोजसेवारसविशारदम् ॥११॥
जवेन विष्णुचिन्तायाः परमं मार्गदर्शिनम् ।
स्मृत्यैव स्वानुरक्तानां दृष्टादृष्टार्थसाधनम् ॥१२॥
स्वभक्तप्रत्यनीकानां मारणं सुरपूजितम् ।
[2]संस्तूयमानचरितं सिद्धगन्धर्वदानवैः ॥१३॥

(तस्य सर्वशरण्यत्वं निर्दोषत्वं कल्याणगुणाकरत्वं च)

भक्तारिभञ्जनपरं शरण्यं शरणार्थिनाम् ।
नित्यनिःसीमनिर्दोषकल्याणगुणसागरम् ॥१४॥

(तत्पादप्रान्ते साधकनामलेखनम्)

एवंभूतं समालिख्य सदानन्दं सुदर्शनम् ।
तत्पादपद्मपर्यन्ते साधकं नाम विन्यसेत् ॥१५॥

(ततः पर्यन्ते षट्कोणचक्रलेखनम्)

इन्दुबिम्बस्य पर्यन्ते षट्कोणं चक्रमालिखेत् ।
आग्नेयममितप्रख्यममोघं सर्वसाधकम्[3] ॥१६॥

(तत्र षडक्षरविन्यासः)

प्राच्यादिदिक्षु कोणेषु षड्वर्णान्विन्यसेन्मनोः ।

---

1. नमस्तत्त्वेन A C.
2. संस्तूयमानमनिशम् D.
3. ॰घातकम् A D.

(अङ्गमन्त्रन्यासः)

षट्सु कोणान्तरालेषु त्वङ्गमन्त्रान्न्यसेत्क्रमात् ॥

(ततश्चतुर्दलपद्मलेखनम्)

अस्माद्बहिस्तथा पद्मं चतुर्दलसमन्वितम् ।

(तत्र न्यसनीया वर्णाः)

सबिन्दुवर्म फट्चास्य दलेष्वेषु क्रमान्न्यसेत् ॥

(अन्तरालेष्वन्तःस्थवर्णविन्यासः)

दलान्तरालेष्वन्तःस्थान्विन्यसेत्साधकस्तथा ।

(ततः षोडशकेसराष्टदलपद्मलेखनम्)

बाह्ये तत्राष्टपत्राब्जमन्तः षोडशकेसरम् ॥१९॥

(केसरेषु षोडशस्वरविन्यासः)

केसरेषु क्रमादस्य विलिखेत्षोडश स्वरान् ।

(दलेष्वष्टाक्षरमन्त्रन्यासः)

अष्टाक्षरं महामन्त्रं दलेष्वस्य समालिखेत् ॥२०॥

(द्वात्रिंशत्केसरषोडशदलपद्मलेखनम्)

द्वात्रिंशत्केसरं चास्य बहिः षोडश[1]पत्रकम् ।

(केसरेषु कादिसान्तवर्णविन्यासः)

ककारादि सकारान्तं केसरेष्वस्य चालिखेत् ॥२१॥

---

1. °पत्रगम् B C E F.

(दलेषु षोडशार्णमन्त्रवर्णन्यासः)

दलेष्वस्य लिखेन्मन्त्रं षोडशार्णं तु वैष्णवम् ।

(द्वात्रिंशत्केसरदलपद्मलेखनम्)

द्वात्रिंशत्केसरदलं बाह्ये तस्य समालिखेत् ॥२२॥

(केसरेषु वाराहानुष्टुभमन्त्रवर्णन्यासः)

केसरेष्वस्य पद्मस्य प्राच्यादिषु यथाक्रमम् ।
मन्त्रमानुष्टुभं सम्यग्वाराहं[1] विलिखेत्परम् ॥२३॥

(दलेषु नारसिंह्मानुष्टुभमन्त्रवर्णन्यासः)

द्वात्रिंशति दलेष्वस्य नारसिंह्मं क्रमाल्लिखेत् ।
आनुष्टुभं महामन्त्रममोघं सर्वसाधकम् ॥२४॥

(चतुःषष्टिदलपद्मलेखनम्)

तस्य बाह्ये लिखेत्पद्मं चतुःषष्टिदलैर्युतम् ।

(तद्दलेषु पातालनारसिंह्ममन्त्रन्यासः)

पातालनारसिंह्माख्यं तद्दलेषु[2] न्यसेन्मनुम् ॥२५॥

(पुनरष्टदलपद्मलेखनम्)

पुनश्च पद्मं विन्यस्य दलैरष्टभिरावृतम् ।

---

1. स्याद्वै वाराहम् A E F; सत्वैर्वाराहम् ? B C.
2. तद्दलैर्विन्यसेन्मनुम् A B C; तद्दले विन्यसेन्मनुम् E F.

(तद्दलेष्वष्टाक्षरनारसिंह्ममन्त्रन्यासः)

अष्टाक्षरं नारसिंह्मं तद्दलेषु समालिखेत् ॥२६॥

(तद्बहिर्माहेन्द्रमण्डलकल्पनम्)

तद्बाह्ये मण्डलं कुर्यान्माहेन्द्रं वज्रभूषितम् ।
जाज्वल्यमानं स्वेनैव सर्वालंकारमण्डितम् ॥२७॥

(तद्बहिः साधकनाम्ना सह तद्बीजन्यासः)

तस्य बाह्ये महादिक्षु प्रागादिषु यथाक्रमम् ।
तद्बीजं विन्यसेद्धीमान्निजनाम्ना [1]समन्वितम् ॥

(बहिष्कोणेष्वन्तःस्थवर्णन्यासः)

बहिष्कोणेषु चतुर्षु तथाऽन्तःस्थान्प्रकल्पयेत् ।

(कोणान्तरालेषु तद्बीजन्यासः)

कोणाभ्यन्तरभागेषु तद्बीजं विन्यसेत्पुनः ॥२९॥

(तत्परितः स्वराणां प्रातिलोम्येन विन्यासः)

परितस्तत्स्वरान्सर्वान्प्रातिलोम्येन चालिखेत् ।

(तत्परितः सादिकान्ताक्षरविन्यासः)

सकारादि ककारान्तं विन्यसेत्परितस्तथा ॥३०॥

(स्वनाम्ना पाशाङ्कुशाभ्यां चावेष्टनम्)

विदर्भितं स्वनाम्नैव [2]परितोऽन्त्ययुगं [3]न्यसेत् ।

---

1. समायुतम् D.
2. परितोऽन्त्ययुगम A B D F.
3. लिखेत् A B C E F.

पाशेनावेष्टयेदेतदङ्कुशेन तथाऽऽतुरः[1] ॥३१॥

(ततो भूपुरकल्पनम्)

पुटितं भूपुरं तस्य बाह्ये कुर्यादतन्द्रितः ।

(समन्तात्केशवादिमूर्तिन्यासः)

केशवादीन्मूर्तिमतः समन्तादस्य विन्यसेत् ॥

(तत्र केशवस्वरूपवर्णनम्)

तप्तजाम्बूनदप्रख्यं पुण्डरीकायतेक्षणम् ।
अपारकरुणं पद्मशङ्खचक्रगदाधरम् ॥३३॥
पीताम्बरधरं देवं वनमालाविभूषितम् ।
हारकेयूरकटककुण्डलैरुपशोभितम् ॥३४॥
चतुर्बाहुमुदाराङ्गं प्रसन्नवदनं विभुम्[2] ।
प्रागादि विन्यसेद्देवं केशवं क्लेशनाशनम् ॥३५॥

(नारायणस्वरूपवर्णनम्)

शङ्खपद्मगदाचक्रधरं नीलाम्बुदच्छविम् ।
सर्वालंकारसंयुक्तं कुर्यान्नारायणं ततः[3] ॥३६॥

(माधवस्वरूपवर्णनम्)

पद्मकौमोदकीशङ्खचक्रधारिणमव्ययम् ।
देवमिन्दीवरश्यामं माधवं भावयेत्ततः ॥३७॥

---

1. पाशेन वेष्टये° A B C E F.
2. परम् A B C E F.
3. परम् A B C E F

(गोविन्दस्वरूपवर्णनम्)

चक्रकौमोदकीशङ्खपद्मायुधविराजितम् ।
इन्दुबिम्बनिभं कुर्याद्गोविन्दममितौजसम् ॥३८॥

(विष्णुस्वरूपवर्णनम्)

गदाब्जशङ्खचक्रास्त्रधरं परमभूषितम् ।
विष्णुं विश्वपतिं कुर्यात्पद्मकिञ्जल्कसंनिभम् ॥

(मधुसूदनस्वरूपवर्णनम्)

चक्रशङ्खाम्बुजगदाधारिणं करुणानिधिम् ।
रक्तपद्मदलप्रख्यं भावयेन्मधुसूदनम् ॥४०॥

(त्रिविक्रमस्वरूपवर्णनम्)

चक्रकौमोदकीपद्मशङ्खसेवितमीश्वरम् ।
उज्ज्वलत्कनकप्रख्यं तं कुर्वीत त्रिविक्रमम् ॥४१॥

(वामनस्वरूपवर्णनम्)

शङ्खचक्रगदापद्मधरं परमभूषितम् ।
तरुणादित्यसंकाशं वामनं भावयेत्ततः ॥४२॥

(श्रीधरस्वरूपवर्णनम्)

पद्मचक्रगदाशङ्खधरं सद्गुणसागरम् ।
पुण्डरीकनिभं देवं श्रीधरं परिकल्पयेत् ॥४३॥

(हृषीकेशस्वरूपवर्णनम्)

गदासुदर्शनयुते शङ्खपद्मे च बिभ्रतम् ।
विद्युत्प्रभं हृषीकेशं कुर्वीत कमलेक्षणम् ॥४४॥

(पद्मनाभस्वरूपवर्णनम्)

शङ्खपद्मे गदाचक्रे तथा बिभ्राणमुज्ज्वलम् ।
सहस्रादित्यसंकाशं पद्मनाभं तु कारयेत् ॥४५॥

(दामोदरस्वरूपवर्णनम्)

पद्मशङ्खगदाचक्रधरं बन्धूकसंनिभम् ।
भक्त्येकसुलभं देवं दामोदरमथ स्मरेत् ॥४६॥

(चतुर्थ्यन्तानां तत्तन्नाम्नामपि लेखनम्)

एवं क्रमेण न्यस्यैतानेषां नामानि च न्यसेत् ।
नमोऽन्तान्यमुकं रक्ष रक्षेति च समन्ततः ॥४७॥

(प्रागादिषु प्रादक्षिण्येन बीजाक्षरन्यासः)

यं शं रं षं तथा लं सं वं हं चेति द्वयं द्वयम् ।
प्राच्यादिषु महादिक्षु प्रादक्षिण्येन विन्यसेत् ॥

(ऐशान्यादिष्वप्रादक्षिण्येन बीजाक्षरन्यासः)

यं शं रं षं तथा लं सं वं हं चेति युगं युगम् ।
[1]ऐशान्यादिषु कोणेषु विन्यसेदप्रदक्षिणम् ॥४९॥

(पुनः पाशाङ्कुशाभ्यां वेष्टनम्)

पाशेन तु समावेष्ट्य [2]अङ्कुशेनापि वेष्टयेत् ।
सर्वमेतत्[3]सबीजेन हृल्लेखमनुना वृतम् ॥५०॥

---

1. ईशान्यादिषु A B C E F.
2. अङ्कुशेन तु A B C E F.
3. °सजीवेन A B C E F.

(प्रागादिचतुर्दिक्षु विष्णुविन्यासस्तेषामायुधानि च)

प्रागादिषु चतुर्दिक्षु विन्यसेद्विष्णुमव्ययम् ।
चक्रकौमोदकीशार्ङ्गखड्गैर्युक्तं यथाक्रमम् ॥५१॥
[1]साधारणे च सर्वेषां शङ्खचक्रे वरायुधे ।

(आग्नेयादिकोणेषु हृषीकेशन्यासः)

आग्नेयादिषु कोणेषु हृषीकेशं ततो न्यसेत् ॥५२॥

(तेषामायुधविशेषाः)

शङ्खं हलं च मुसलं शूलं चैतेषु धारयेत् ।

(कोणान्तरालेष्वष्टसु जनार्दनविन्यासः)

विकोणेष्वष्टसु तथा जनार्दनमथो न्यसेत् ॥५३॥

(तेषामायुधविशेषाः)

दण्डं कुन्तं तथा शक्तिं पाशमङ्कुशमेव च ।
वज्रं तथैव परशुं तथा शतमुखानलम् ॥५४॥
करेष्वमीषामेतानि विलिखेत्तु यथाक्रमम् ।

(तत्तत्पार्श्वेषु तत्तत्परिवारलेखनम्)

प्रत्येकं परिवारांस्तु तेषां पार्श्वेषु विन्यसेत् ॥५५॥

(ततो भूमौ भूम्या सह पुरुषोत्तमस्मरणम्)

वराहरूपिणं देवं शङ्ख[2]चक्रगदाधरम् ।

---

1. "साधारणौ च सर्वेषां शङ्खचक्रौ वरायुधौ" इति सर्वत्र.
2. ०चक्रधरं परम् A B C E F.

भूमौ च सहितं भूम्या संस्मरेत्पुरुषोत्तमम् ॥५६॥

(अम्बरे नरसिंहस्मरणम्)

अम्बरे नारसिंहं तु चिन्तयेदमितौजसम् ।
भीषणं घटितानेकभूषणं दारितासुरम् ॥५७॥

(प्रागादिषु चक्रगदाशार्ङ्गखड्गस्मरणम्)

प्राच्यां दिशि महाज्वालागतं चक्रं स्मरेद्बुधः ।
दक्षिणस्यां दिशि तथा स्मरेज्ज्वालागतां गदाम् ॥
प्रतीच्यां शार्ङ्गमत्युग्रज्वालामध्यगतं स्मरेत् ।
उत्तरस्यां दिशि तथा स्मरेत्खड्गं सुदारुणम् ॥

(अथास्य यन्त्रस्यापराङ्गकल्पनाय मध्ये चतुर्विंशत्यरचक्रकल्पनम्)

अपराङ्गेऽथ यन्त्रस्य मध्ये चक्राब्जसंस्थितम् ।
चतुर्विंशत्यरं चक्रं सुनेमि रुचिराकृति ॥६०॥

(तन्मध्ये द्वादशदलपद्मलेखनम्)

मध्येचक्रं न्यसेत्पद्मं युक्तं[1] द्वादशभिर्दलैः ।

(तत्कर्णिकायामाग्नेयमण्डलन्यासः)

चक्राब्जकर्णिकास्थाने न्यसेदाग्नेयमण्डलम् ॥६१॥

(तन्मध्ये योगनृसिंहलेखनम्)

तन्मध्ये योगपट्टेन पिनद्धाङ्गं सनातनम् ।

---

1. युग्मद्वा° (?) B C.

नारसिंहं चतुर्बाहुं चतुश्चक्रधरं परम् ॥६२॥
समासीनमशोकस्य मूले कालानलद्युतिम् ।
सर्वाभरणसंयुक्तं सर्वभक्तार्तिहारिणम् ॥६३॥
अपारसंख्यकल्याणगुणपूर्णमहार्णवम् ।
भक्तानुकम्पिनं नित्यं सर्वलोकैकनायकम् ॥६४॥

(तत्पादपर्यन्ते द्वयोस्तद्भृत्ययोर्विन्यासः)

एवं विन्यस्य तत्पादपर्यन्ते [1]विन्यसेदुभौ ।
तदाज्ञाकारिणौ भीमौ नीलनीरदविग्रहौ ॥६५॥
उदग्रकायौ भीमाक्षौ भीमायुधधरौ वरौ ।
दंष्ट्राकरालवदनौ [2]विन्यसेद्वृत्तलोचनौ ॥६६॥

(चक्रस्य प्रागादिष्वष्टशक्तिध्यानम्)

चिन्तयेदथ चक्रस्य समन्तादष्टयोषितः ।
ऊर्ध्वमाबद्धकेशाढ्यास्तच्छक्तीः प्राप्तयौवनाः ॥
सर्वालंकारसंयुक्ता द्विभुजा माल्यधारिणीः ।
प्राच्यां दिशि जयां देवीं [3]पीतवर्णां विचिन्तयेत् ॥
आग्नेय्यां मोहिनीं देवीं श्यामलामायतेक्षणाम् ।
याम्यामनुस्मरेद्देवीं विजयां कृष्णरूपिणीम् ॥६९॥

---

1. चिन्तयेदुभौ A B C E F.
2. विन्यस्यौ वृत° D.
3. सितवर्णाम् A D E F.

रक्तवर्णां तथा देवीं नैर्ऋत्यां ह्लादिनीं तथा ।
अजितां पीतवर्णां तु प्रतीच्यां संस्मरेत्पराम् ॥
वायव्यां दिशि मायां तु कृष्णवर्णां सनातनीम् ।
उदीच्यां रक्तवर्णां तामाशायामपराजिताम् ॥७१॥
ऐशान्यां संस्मरेत्सिद्धिं धूम्रवर्णामतः परम् ।

(अथ यथोक्तलक्षणयन्त्रमहिमा)

एवमेतन्महायन्त्रं महापातकनाशनम् ॥७२॥
आयुरारोग्यधनदं पुत्रमित्रकलत्रदम् ।
सर्वविघ्नोपशमनं सर्वदुष्टनिवारणम् ॥७३॥
यो यदर्थी लिखेद्यन्त्रं तत्तदस्य प्रयच्छति ।
मणिविद्रुममुक्ताढ्यं कुर्याद्यन्त्रं हिरण्मयम् ॥७४॥
राजा चेद्राज्यमाप्नोति निष्कण्टकमनामयम् ।

(भूर्जपत्रलिखितस्यापि यन्त्रस्य सर्वफलसाधनता)

भूर्जपत्रे लिखित्वैतत्कुङ्कुमैश्चन्दनेन तु ॥७५॥
यो मर्त्यः शिरसा धत्ते तस्य स्यात्सर्वमीप्सितम् ।
पिशाचोरगरक्षांसि क्षिप्रं नश्यन्ति तस्य वै ॥७६॥

(एतद्यन्त्रशिलाप्रतिष्ठाया मुक्तिसाधनत्वम्)

शिलाप्रतिष्ठां यः कुर्यादेतस्य जगतीतले ।
सर्वान्कामानिहावाप्य विष्णुसायुज्यमाप्नुयात् ॥

(लोहादिभिर्यन्त्रप्रतिमानिर्माणफलम्)

लोहैर्वा रजतेनाथ यः कुर्यात्प्रतिमां बुधः ।
त्रिवर्गफलमाप्नोति निर्वाणमचिरात्पुनः ॥७८॥

(कर्षणादिप्रतिष्ठान्तायतननिर्माणफलम्)

कर्षणादि प्रतिष्ठान्तं कुर्यादायतनं च यः ।
आप्नुवन्ति च तद्वंश्याः पुण्यलोकाननुत्तमान् ॥

(भयादिषु यन्त्रस्मरणे फलम्)

भयागमे च संग्रामे वादे वा यः स्मरेदिदम् ।
विजय तस्य हस्तस्थो नात्र कार्या विचारणा ॥

(त्रिसंध्यं यन्त्रार्चनं मुक्तिसाधनम्)

अर्चयेद्यस्त्रिसंध्यं वै यन्त्रमेतदनुत्तमम् ।
तापत्रयविनिर्मुक्तो विष्णुलोके महीयते ॥८१॥

(रक्षाविधौ राज्ञां वैशेषिकविध्यारम्भः)

राज्ञां रक्षाविधाने तु विशेषं शृणु नारद ।
राज्यार्थी हृतराज्यो वा परिभूतोऽथवा नृपैः ॥

(तत्र प्रथममाचार्यपूजाविधिः)

सौदर्शनस्य यन्त्रस्य प्रदातारं गुरुं परम् ।
सर्वेभ्यो ह्यधिकं मत्वा तमभ्यर्च्य महाधनैः ॥

(ततो भगवदाराधनविधिः)

ततो नारायणं देवं पुण्डरीकायतेक्षणम् ।
श्यामलं पीतवसनं सर्वाभरणभूषितम् ॥८४॥
आराधयेच्चतुर्बाहुमाचार्योक्तविधानतः ।

(ततो यन्त्रनिर्माणम्)

तप्तजाम्बूनदमयं मणिविद्रुमचित्रितम् ॥८५॥
सर्वालंकारसंयुक्तं कारयेद्यन्त्रमुत्तमम् ।

(यन्त्रनिर्माणस्य राज्यप्राप्तिहेतुत्वम्)

एतत्करणमात्रेण राज्यमाप्नोत्यनामयम् ॥८६॥

(प्रतिष्ठापूर्वकार्चनस्य सप्तद्वीपान्तभूमिप्राप्तिहेतुत्वम्)

प्रतिष्ठाप्यार्चयेदेतत्सादरं सर्वसिद्धिदम् ।
ततो भूमिमवाप्नोति सप्तद्वीपां सपत्तनाम् ॥८७॥

(अन्ततस्त्रैलोक्यपालयितृत्वसिद्धिः)

वश्या भवन्ति सततं सिद्धगन्धर्वदानवाः ।
त्रैलोक्यराज्यमखिलं पालयत्यवनीतले ॥८८॥

(परकृताभिचारपरावर्तनसिद्धिः)

अभिचाराः परकृताश्चैनमप्राप्य [1]भीषिताः ।

---

1. दीपिताः (?) D.

प्रविशान्ति प्रयोक्तारमापगेवाचल[illegible] ॥८९॥

(अवग्रहादिपरिहारसिद्धिः)

अवग्रहाश्च नश्यन्ति शत्रवो विद्रवन्ति च ।
अपमृत्युमृगव्यालचोररोगादिभिर्भयम्[1] ॥९०॥
न तस्य राज्ये भवति विद्यते तत्कुले बलम् ।

(सर्वेषां स्वधर्मप्रवृत्तिसिद्धिः)

सर्वे स्वेष्वेव धर्मेषु प्रवर्तन्ते सदा मुने ॥९१॥

(दुर्वाससा शप्तस्येन्द्रस्य यन्त्रेणानेन पुनः स्वपदप्राप्तिः)

पुरा दुर्वाससः शापाद्धृतराज्ये शचीपतौ ।
एतत्प्रसादादखिलं पुनः प्राप त्रिविष्टपम् ॥९२॥

(चतुर्मुखस्य भगवत्सकाशाद्यन्त्रप्राप्तिः)

एतत्पुरा महायन्त्रं ब्रह्मणे प्रोक्तवान्हरिः ।

(चतुर्मुखेन विश्वकर्मणा यन्त्रविमानयोर्निर्मापणम्)

ब्रह्मा च विश्वकर्माणमाहूयैतदकारयत् ॥९३॥
विमानं च

(तदाप्रभृति यन्त्रस्यैव रक्षासाधनत्वम्)

तदारभ्य देवगन्धर्वदानवाः ।
अनेन रक्षणाविधिं चक्रुः पूर्वे नृपास्तथा ।

---

1. ०र्भयः (?) D.

(अध्यायार्थनिगमनम्)

तस्माद्राज्ञां च सर्वेषामेष रक्षाविधिः परः ॥९४॥

अभिनवदिननाथप्रोज्ज्वलद्बिम्बतुल्यं
कमलभवमुखाद्यैः संश्रितं देववृन्दैः ।
परिगतमपि भूतैः पञ्चभिः सेव्यमानं
प्रकृतिमहदहंकारैः स्मरेद्यन्त्रराजम् ॥९५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायाम्

महासुदर्शनयन्त्रलक्षणं नाम षड्विंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १५६५)

ओम् ।

## अथ धारकयन्त्रनिरूपणं नाम सप्तविंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(वृत्तानुवादपूर्वकं धारकयन्त्रविषयकः प्रश्नः)

श्रीनारदः ।

कथितो यन्त्रराजस्य देवदेवस्य विस्तरः ।
स्वरूपं साधनं चास्य प्रकारश्च फलं तथा ॥१॥
अद्येदं श्रोतुमिच्छामि भगवन्परमेश्वर ।
एतदत्यद्भुतं दिव्यं ध्रियते के[1]न भूषणम् ॥२॥
न चास्य [2]धारणे शक्तिं कस्यचित्कलयाम्यहम् ।
अतिशक्तितयाऽस्येमं संशयं छेत्तुमर्हसि ॥३॥

(तत्प्रतिवचनारम्भः)

अहिर्बुध्न्यः ।

सत्यं न केनचिद्धर्तुं पार्यते तन्महाद्युति ।

1. येन A B C E F.
2. भरणे D E F.

ऋते यन्त्रान्तरादस्माद्देवर्षे[1] शक्तिशालिनः ॥४॥
शृणु तस्य मुनिश्रेष्ठ स्वरूपं[2] वीर्यमद्य वै ।

(तत्र प्रथमं माहेन्द्रमण्डलनिर्माणम्)

प्रथमं मण्डलं कृत्वा माहेन्द्रं वसुधात्मकम्[3] ॥५॥
सर्वालंकारसंयुक्तं यन्त्रलाञ्छनलाञ्छितम्[4] ।

(तत्कोणेषु भूबीजाक्षरन्यासः)

भौममेतस्य कोणेषु विन्यसेद्बीजमुत्तमम् ॥६॥
शेषाद्यैरष्टभिर्नागैर्धार्यमाणं[5] समन्ततः ।

(मण्डलप्राग्भागे शेषगुलिकयोर्न्यासः)

प्राग्भागे मण्डलस्यास्य भीषणौ भीमलोचनौ ॥
विलिखेच्छेषगुलिकौ लोकयन्तौ परस्परम् ।

(दक्षिणभागे वासुकिशङ्खयोः)

वासुकिं शङ्खपालं च वीक्षमाणौ परस्परम् ॥८॥
दक्षिणस्यां दिशि तथा विन्यसेदस्य साधकः ।

(पश्चिमे तक्षकमहाम्बुजयोः)

पश्चिमायां लिखेदेवं[6] तौ तक्षकमहाम्बुजौ ॥९॥

---

1. यन्त्रान्तरात्तस्मा॰ B C E F.
2. स्वरूपं रूपमद्य वै D.
3. वा सुधात्मकम् D.
4. वज्रलाञ्छन॰ A B C.
5. ॰र्वार्यमाणम् D.
6. लिखेन्नाभौ तक्षकं च महाम्बुजम् D.

(उत्तरभागे कार्कोटकाम्बुजयोः)

कार्कोटकं चाम्बुजं च लिखेदुत्तरतो मुने ।

(मध्ये वह्निमण्डलकल्पना)

तस्य मध्ये महाज्वालामालावर्तविराजितम् ॥१०॥
कोणषट्कयुतं वह्निमण्डलं बीजसंयुतम् ।
समालिख्य च

(तन्मध्ये वायुमण्डलविन्यासः)

तन्मध्ये वायव्यं मण्डलं लिखेत् ॥
वर्तुलं बिन्दुसंयुक्तं तद्बीजेन समन्वितम् ।

(तन्मध्ये दशारचक्रलेखनम्)

तन्मध्ये चक्रमतुलं प्रोज्ज्वलन्नेमिमण्डलम् ॥१२॥
अरैर्दशभिराकीर्णं विन्यसेदरिमर्दनम् ।

(अरेषु सुदर्शननारसिंहमन्त्रन्यासः)

मन्त्रं सौदर्शनस्यास्य नारसिंहस्य विन्यसेत् ॥
द्वाभ्यां द्वाभ्यां तु वर्णाभ्यामरेषु नवसु क्रमात् ।
दशमे हनशब्दं तु विन्यसेदरकेऽस्य वै ॥१४॥

(चक्रमध्ये अष्टदलपद्मलेखनम्)

चक्रमध्ये न्यसेत्पद्मं दलैरष्टभिरन्वितम् ।

---

1. वर्तुलज्ज्वलसंयुक्तं (?) D.

कर्णिकाघटितं रम्यं केसरैरुपशोभितम् ॥१५॥

(कर्णिकायां प्रणवन्यासः)

तत्कर्णिकायां विलिखेत्तारं संसारतारकम् ।

(तत्रैवाभीष्टार्थसाध्यनाम्नोर्विलेखनम्)

अभीष्टमर्थं साध्यस्य नामधेयमतः परम् ॥१६॥

(एवंभूतेन धारकयन्त्रेण सकलार्थसिद्धिः)

तदेतत्परमं दिव्यं मङ्गलानां च मङ्गलम् ।
पवित्राणां पवित्रं च [1]चोरपीडानिवारणम् ॥१७॥
सर्वार्थसाधकं घोरं [2]विश्ववन्द्यमनुत्तमम् ।

(यन्त्रेणानेनेन्द्रस्य शत्रुजयप्राप्तिः)

पुरा देवेषु दैतेयैरभिभूतेषु वासवः ॥१८॥
[3]बृहस्पतिं समाहूय प्रोवाचेदं वचस्तदा ।
बाधन्ते नितरामस्मानिमे दैतेयदानवाः ॥१९॥
केनोपायेन भगवन्विजेष्यामो महासुरान् ।
बलहानिः कथं वैषां भविता भगवन्वद ॥२०॥
एवं मघवता प्रोक्तः प्रोवाचेदं बृहस्पतिः ।
[4]सौदर्शनेर्नृसिंहस्य यन्त्रस्य करणादिह ॥२१॥

---

1. चोरव्याधिनि° D.
2. विश्ववश्य° D.
3. बृहस्पतिमुपाहूय D.
4. सुदर्शननृसिंहस्य E F.

नश्यन्ति शत्रवः सर्वे सुराणां बलसूदन ।
इत्युक्त्वा स्थापयामास यन्त्रं मघवतः पुरे ॥२२॥
मणिविद्रुममुक्ताढ्यं सौवर्णममितप्रभम् ।
ततःप्रभृति दैतेया नष्टश्रीका हतात्विषः ॥२३॥
पराजिता विद्रवन्ति दिशो नष्टनिकेतनाः ।
तदेतदतिवीर्यं तु यन्त्रं सुरसुपूजितम् ॥२४॥

(अस्यैव यन्त्रस्य पूर्वोक्तमहासुदर्शनयन्त्रधारकत्वम्)

तदेतेनैव यन्त्रेण यन्त्रं सौदर्शनं परम् ।
धार्यते तत्सुरमुने विचित्रं विष्टरात्मना ॥२५॥
यन्त्रमेतन्मयाऽऽख्यातमेवं माहासुदर्शनम् ।
धृतं यन्त्रेण वीर्यात्तु सुदर्शननृसिंहयोः ॥२६॥

(राजन्वद्देशस्यैव यथोक्तयन्त्रभरणक्षमत्वम्)

एतस्य तु विशिष्टस्य भरणे सैव भूः क्षमा ।
यस्याः पालयिता राजा धार्मिको दृढविक्रमः ॥
देवद्विजगुरुप्राज्ञपूजकः परमास्तिकः ।

(राज्ञो नित्यमेतदभ्यर्चनविधिः)

एतदभ्यर्चयेद्राजा चक्राकारमतन्द्रितः ॥२८॥
पुरुषाकारमपि वा तथैवोभयतोमुखम् ।

(एतन्मन्त्रप्रदातुर्विशेषतः पूज्यत्वम्)

[1]एतन्मन्त्रप्रदातारं विशिष्टं पूजयेद्बुधः ॥२९॥

---

1. एवं मन्त्रप्रदातैव D.

(एतन्मन्त्रेण कर्षणादिप्रतिष्ठान्तकर्मविधिः)

कर्षणादीनि कर्माणि प्रतिष्ठान्तान्यमुष्य तु ।
एतन्मन्त्रोक्तमार्गेण कारयेन्नृपतिः स्वयम् ॥३०॥

(तन्त्रस्यास्य सात्त्वतादिभिरेकतन्त्रत्वम्)

सात्त्वतादिषु तन्त्रेषु विहितेनैव चाध्वना ।
सुदर्शनस्य मन्त्रस्य नारसिंहस्य वा मुने ॥३१॥
कल्पप्रयुक्ता विधयः सर्वे चैतस्य संनिधौ ।
भवन्ति सकलाश्चैतत्प्रभावेण प्रयोजिताः ॥३२॥
तस्माद्यथोक्तमार्गेण प्रतिष्ठाप्यैतदर्चयेत् ।

(राज्ञामेतदर्चनेन राज्यादिलाभः)

राजा राज्यं जयं[1] भूतिमायुरारोग्यमाप्नुयात् ॥३३॥

(नित्यमर्चयतः फलविशेषः)

नित्यमर्चयतो राज्ञः सप्तद्वीपवती मही ।
[2]समुद्रवसना चैषा विश्वा वश्या भविष्यति ॥३४॥

(होमार्थं प्रासादकुण्डयोर्निर्माणम्)

[3]प्रासादं लक्षणोपेतं विधाय परमासनम् ।
तत्रैव कारयेत्कुण्डं मन्त्रस्यास्य यथाविधि ॥३५॥

---

1. प्रियम् A B C E F.
2. ससमुद्रवना चैषा A B C E F.
3. प्रसादल॰ D; प्रसादं ल॰ E F.

(साधकेन तत्र होमादिनिर्वर्तनम्)

भूपतेर्यानि कर्माणि साधयंस्तानि[1] साधकः ।
मन्त्रेणानेन जुहुयादस्मिन्कुण्डे समाहितः ॥३६॥

(वैकल्पिकप्रदेशान्तरविधिः)

अनेनैव तु मन्त्रेण राज्ञो रक्षाविधिर्यदि ।
विष्णोरायतने रम्ये मण्डपे[2] मण्डितेऽथवा ॥३७॥
कृत्वैतत्कुण्डमत्रैव राजाऽभ्यर्च्य महाधनैः ।
[3]एतन्मन्त्रप्रदातारं स्वकर्माण्येव कारयेत् ॥३८॥

(पुनर्यन्त्रार्चनजन्यफलविशेषकथनम्)

अनेन कृतकृत्यस्तु[4] राजा राज्यमवाप्नुयात् ।
नीरोगो निःसपत्नश्च दीर्घायुश्च भविष्यति ॥३९॥
नागैरनेकसाहस्रैरसंख्येयैश्च वाजिभिः ।
स्यन्दनैर्नरवर्यैश्च पूर्णा तस्य पुरी भवेत् ॥४०॥
[5]यश्चैनमर्चयेद्राजा यन्त्रराजमनुत्तमम् ।
सर्वमन्त्रविशिष्टत्वादर्चितास्तेन[6] देवताः ॥४१॥
यदर्थं योऽर्चयेदेनमात्मार्थे[7] यतते परम् ।

1. साधयंस्तत्र A B C; साधयंस्तस्य E F.
2. मण्डले D.
3. एवं तत्र प्रदातारं स्वकर्मानेन कारयेत् D.
4. कृतरक्षस्तु A B C E F.
5. त्रिसंध्यमर्चयेद्भक्त्या A B C E F.
6. °स्तस्य A B C E F.
7. °देतन्नामार्थम् (?) D.

सर्वेषामेव भूतानां राज्ञश्च कुरुते हितम् ॥४२॥

(मन्त्रे यन्त्रे च राज्ञामेवाधिकारः)

अयं मन्त्रश्च यन्त्रं च राज्ञामेव विधीयते ।
सर्वसाधारणार्थानि मन्त्रजातानि नारद ॥४३॥
एतदभ्यर्चनपरा मन्त्रिणो यस्य भूपतेः ।
अभिरक्षन्ति राजानमरिष्टमुखतोऽपि ते ॥४४॥

(एतत्प्रणामादीनामपि तत्तत्फलसाधनत्वम्)

एतत् प्रणामेन समर्चनेन
संकीर्तनेन स्मरणेन वाऽपि ।
संतोषयेत्संततमस्य सर्वं
मनीषितं हस्तगतं प्रपश्येत् ॥४५॥

(अध्यायार्थनिगमनम्)

इति निगदितमेतद्यन्त्ररूपं समन्त्रं
सकलदुरितभेदव्यापृतं संश्रितानाम् ।
तदिह कृतविधेयो भूपतिः पूर्णकामो
भुवनतलमशेषं प्राप्नुयाच्चक्रवर्ती ॥४६॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां
धारकयन्त्रनिरूपणं नाम सप्तविंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १६११)

---

ओम् ।

## अथ भगवदाराधनविधिनिरूपणं नाम

## अष्टाविंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(आराधनविधिनिरूपणारम्भः)

अहिर्बुध्न्यः ।

आराधनविधिं वक्ष्ये समासेनैव नारद ।
आयुरारोग्यविजयभूप्रदं[1] धनधान्यदम् ॥१॥

(तस्यैहिकामुष्मिकफलसाधनत्वम्)

पुत्रपश्वन्नकामानां तत्तत्साधनमुत्तमम् ।
भुक्तिमुक्तिप्रदं शान्तं पराभिभवकारणम्[2] ॥२॥

(तत्रादौ स्नानविधिः)

तीर्थं गत्वा शुचौ देशे मृदमादाय मन्त्रतः ।

---

1. °विभूतिधनधान्यदम् A B C E F.
2. °वारणम् A B C E F.

द्विधा कृत्वैकभागेन कुर्याद्देहस्य शोधनम् ॥३॥
स्नात्वाऽऽचम्य गृहीत्वाऽन्यं[1] मृद्भागं विन्यसेत्त्रिधा ।
वामे पाणौ दिशाबन्धं विदध्यादेकभागतः ॥४॥
गात्रालेपं ततः कुर्यादन्येनांशेन नारद ।
संकल्पयेत्तृतीयांशं [2]तीर्थपीठमतः परम् ॥५॥
गङ्गां तत्र स्मरेद्विष्णोर्वामपादविनिःसृताम् ।
अर्घ्यमस्यै निवेद्याथ ततो हृत्वा जलाञ्जलिम् ॥
स्वमूर्ध्नि सिञ्चेत्त्रिष्कृत्वः सप्तकृत्वोऽभिमन्त्रितम् ।
निमग्नस्तत्र देवस्य पादाब्जन्यस्तमस्तकः ॥७॥
यथाशक्ति [3]जपेन्मन्त्रं तस्य ध्यानपरायणः ।
तत उत्तीर्य चाचम्य धृत्वा वस्त्रोत्तरीयके ॥८॥
धृतोर्ध्वपुण्ड्रः स्वाचान्तो देवादीनच्युतात्मकान् ।
ध्यात्वा संतर्पयेदन्यदाह्निकं विधिवच्चरेत् ॥९॥
यागभूमिमथागम्य क्षालिताङ्घ्रिकरो वशी ।

(आराधनोपक्रमः)

आचम्य वाग्यतो भूत्वा प्रारभेत समर्चनम् ॥१०॥
चतुर्द्वारयुतं रम्यं [4]गत्वाऽऽवरणमात्मवान् ।
द्वाःस्थानशेषानभ्यर्च्य ततो मण्डपमाश्रयेत् ॥११॥

---

1. गृहीत्वा तमपरं विन्यसेत्त्रिधा D.
2. तीर्थं पीठ॰ D.
3. जपन्मन्त्रं D.
4. गत्वा शरण॰ D.

(मण्डपवर्णनम्)

[1]तुङ्गं मङ्गलसंयुक्तं [2]मणिकुट्टिमभूषितम् ।
सौवर्णैर्बहुभिः स्तम्भैर्मणिविद्रुमभूषितैः ॥१२॥
उपेतं दीपिकाजालैर्जातरूपमयैर्वृतम् ।
विचित्राभिः पताकाभिस्तोरणैरुपशोभितम् ॥१३॥
मणिकिङ्किणिजालैश्च वितानैः क्षौमकल्पितैः ।
विराजमानं सर्वत्र मणिपीठवि[3]राजितम् ॥१४॥

(तत्र वेदिकानिर्माणम्)

तस्य मण्डपरत्नस्य मध्ये परमभास्वराम् ।
पद्मरागमयैः स्तम्भैश्चतुर्भिरुपशोभिताम् ॥१५॥
मुक्तामयवितानेन युक्तां रत्नचतुष्किकाम् ।
वैडूर्यघटितोत्तुङ्गवेदिकां दीपिकायुताम् ॥१६॥
एवं कर्तुमशक्तश्चेदेवं [4]ध्यायीत पूजकः ।

(तत्र सपरिवारभगवद्ध्यानम्)

एवं चतुष्किकामध्ये चक्राब्जमयविष्टरे ॥१७॥
[5]आधारशक्तिकमठानन्तधर्मादिधारिते ।
पद्मे सोमरविज्योतिःसत्त्वादिपरिवारिते ॥१८॥

---

1. तुङ्गमङ्गल° A; तुङ्गं मण्डल° D.
2. मणिकुट्टिमसंयुतम् D.
3. °विमिश्रितम् D.
4. ध्यायी स° D.
5. श्लोकोऽयं न दृश्यते D.

एवमुक्तप्रकारेण[1] परिवारैर्निषेवितम् ।
वेदैर्मन्त्रैस्तथा शस्त्रैरस्त्रैः शक्तिभिरावृतम् ॥१९॥
ध्यायेत्तदासने[2] देवं समासीनः समासने ।

(भगवत्प्रार्थना)

अर्चयामि त्वदीयोऽहं त्वद्दत्तैरौपचारिकैः ॥२०॥
सांस्पर्शिकैरिति ब्रूयाद्देवमभ्यवहारिकैः[3] ।

(अथ भूतशुद्धिक्रमः)

संहरेद्देहतत्त्वानि प्रतिसंचरवर्त्मना ॥२१॥
ततः स्थूलमिदं देहं शोषयित्वाऽथ संदहेत् ।
प्राणायामेन चाद्येन मन्त्रं नाभ्यां[4] तु विन्यसेत् ॥
तदुद्भूतेन[5] नादेन सुषुम्नामध्यवर्तिना ।
वायुमण्डलमभ्येत्य तदुत्थेनैव वायुना ॥२३॥
संशोषयेदिमं देहं स्थूलं सुरमुने ततः ।
प्राणायामद्वितीयेन हृदये विन्यसेन्मनुम् ॥२४॥
मन्त्रोत्थेनाग्निना देहं दहेन्मण्डलवर्तिना ।
तृतीयेन स्वमात्मानं प्राणायामेन देशिकः ॥२५॥

---

1. देवमुक्तप्रकारैश्च D.
2. ध्यायेत्तदन्तिके शुद्धे D.
3. ब्रूयादेव° B C; ब्रूयादेन° E F.
4. नासां तु A.
5. तदद्भुतेन वातेन D.

अधो [1]निवेशयन्विष्णोर्वामपादाम्बुजस्य वै ।
स्वं तदङ्गुष्ठनिष्ठ्यूतपीयूषाप्लावितं स्मरेत् ॥२६॥
पञ्चौपनिषदैर्मन्त्रैस्ततः संजातविग्रहः ।
न्यस्ताङ्गो मन्त्रविन्मन्त्रैश्चिन्तयित्वा सुदर्शनम् ॥
[2]आवाह्य ब्रह्मरन्ध्रेण हृत्पद्मे सूर्यमण्डलात् ।
प्रारभेत ततः पूजां करन्यासं विधाय वै ॥२८॥
हृद्यागं प्रथमं कुर्यान्नियतेन्द्रियमानसः ।

(पात्रादिस्थापनम्)

आत्मनो दक्षिणे पार्श्वे वासितैः पावनैर्जलैः ॥
पूरितं स्थापयेत्पात्रं मूलमन्त्रेण [3]मन्त्रितम् ।
वामपार्श्वे तथा सर्वं विन्यसेत्साधनान्तरम् ॥३०॥
ततो [4]विस्तीर्य पुरतः शाटिकामतिनिर्मलाम् ।
[5]तस्यामाग्नेयदिग्भागे विन्यसेदर्घ्यपात्रकम् ॥३१॥
[6]पाद्यपात्रमथो न्यस्येत्कोणे दक्षिणपश्चिमे ।
पात्रमाचमनीयस्य विन्यसेत्पश्चिमोत्तरे ॥३२॥
स्नानीयपात्रं दिग्भागे विन्यसेच्छांकरे ततः ।

---

1. निवेशयेद्विष्णोर्वाम° A B C E F.
2. इदमर्धं न दृश्यते D.
3. मन्त्रवित् A B C E F.
4. विस्तीर्य देवस्य शाटिकां पुरतोऽमलाम् A B C E F.
5. तस्मिन्नाग्नेयदिग्भागे विन्यसेत्पाद्यपात्रकम् A B C E F.
6. अर्घ्यपात्रमथो A B C E F.

(अर्घ्यादिषु प्रक्षेप्यद्रव्याणि)

सिद्धार्थमक्षतं चैव कुशाग्रं तिलमेव च ॥३३॥
यवं गन्धं फलं पुष्पमष्टाङ्गं[1] चार्घ्यमुच्यते ।
दूर्वा च विष्णुपर्णी च श्यामाकं पद्ममेव च ॥३४॥
पाद्यद्रव्याणि चत्वारि सोदकानि प्रकल्पयेत् ।
लवङ्गजातीतक्कोलद्रव्याण्याचमनीयके ॥३५॥
[2]सिद्धार्थकादि स्नानीये पूर्ववत्कल्पयेद्बुधः ।

(तत्र मन्त्रासनं प्रथमम्)

[3]अर्घ्यं संकल्पयामीति स्पृशेज्जप्त्वाऽर्घ्यमादितः ॥
पाद्यपात्रादिकेष्वेवं ब्रूयात्सुरमुने क्रमात् ।
गन्धतोयेन संपूर्य पात्राण्येतानि सर्वशः ॥३७॥
अर्घ्यात्किंचित्समुद्धृत्य जलं पात्रान्तरेण तु ।
देवस्य दक्षिणे पाणौ मूलमन्त्रेण विन्यसेत् ॥३८॥
पुष्पं दत्वाऽथ पाद्येन पादौ देवस्य सेचयेत् ।
वस्त्रेण मार्जयित्वाऽथ दद्यादाचमनीयकम् ॥३९॥
अर्घ्यादिदत्त[4]शिष्टानि क्षिपेत्पात्रान्तरे तदा ।
चन्दनं माल्यदानं च धूपं दीपं दिशेत्ततः ॥४०॥

---

1. पुष्पमर्घ्यमष्टाङ्गमुच्यते A B C E F.
2. ' सिद्धार्थकानि ' इति सर्वत्र.
3. ओमर्घ्यं कल्पयामीति जपेत्स्पृष्ट्वार्घ्यमादितः A B C E F.
4. ०भक्तिशिष्टानि D.

पुनराचमनीयं च मुखवासमतः परम् ।
ताम्बूलं च निवेद्याथ प्रणम्यात्मनिवेदनम् ॥४१॥

(अथ स्नानासनं द्वितीयम्)

विधाय स्नानपीठं तु गन्धपुष्पादिनाऽर्चयेत् ।
विज्ञाप्य पादुके[1] दत्वा देवे स्नानासनं[2] गते ॥४२॥
वस्त्रभूषणमाल्यानि व्यपनीय ततः परम् ।
स्नानार्थं शाटिकां दद्यात्पाद्यमाचमनीयकम् ॥
पादपीठप्रदानं च दन्तकाष्ठं दिशेत्ततः ।
जिह्वानिर्लेखनं चैव मुखशोधमथो[3] दिशेत् ॥४४॥
पुनराचमनीयं[4] च तथाऽऽदर्शोपदर्शनम् ।
पुनस्ताम्बूलदानं च तैलाभ्यङ्गमतः परम् ॥४५॥
उद्वर्तनविधानं च दानमामलकस्य च ।
तोयदानं ततः कुर्यात्कङ्कतप्लोतमेव च ॥४६॥
ततो[5] विदद्याद्देवस्य देहशोधनशाटिकाम् ।
हरिद्रालेपनं कुर्यात्प्रक्षालनमतः परम् ॥४७॥
वस्त्रोत्तरीयके दद्यादुपवीतं तथैव च ।
पाद्याचमनके कुर्याद्विचित्रं चन्दनं तथा ॥४८॥

---

1. पादुकां E F.
2. स्नानासने गते D.
3. मुखशोधनमादिशेत् B C.
4. पुनराचमनं चैव A B C E F.
5. इत आरभ्य सार्धाश्चतुर्विंशतिश्लोका न दृश्यन्ते A B C E F पुस्तकेषु.

गन्धं पुष्पं तथा धूपं दीपमाचमनं तथा ।
नृत्तवादित्रगीतादिसर्वमङ्गलसंयुतम् ॥४९॥
अभिषेकं ततः कुर्यान्नीराजनविधिं ततः ।
प्लोतवस्त्रोत्तरीये च उपवीतमतः परम् ॥५०॥
तत आचमनीयं च दत्वा देवाय देशिकः ।

(अथ तृतीयमलंकारासनम्)

अलंकारासनं पश्चादभ्यर्च्य प्रोक्षणादिना ॥५१॥
विज्ञाप्य पादुके दत्वा देवे विष्टरमाश्रिते ।
अर्घ्यादीन्यथ पात्राणि पूर्ववत्कल्पयेत्ततः ॥५२॥
अर्घ्यं पाद्यं ततो दद्यात्तत आचमनीयकम् ।
गन्धवच्चन्दनाद्यैश्च द्रव्यैश्चार्घ्य[1] + + + रेत् ॥५३॥
ततश्चित्राणि वासांसि प्रयच्छद्भूषणानि च ।
यज्ञोपवीतदानं च तत आचमनीयकम् ॥५४॥
गन्धपुष्पप्रदानं चाप्यादर्शस्य प्रदर्शनम् ।
धूपदीपौ तथा दद्यात्पुनराचमनीयकम् ॥५५॥
ततः स्तोत्रं जपेच्छत्रचामराणां प्रदर्शनम् ।
दर्शनं वाहनानां च ततः शङ्खरवं तथा ॥५६॥
वीणाकाहलभेर्यादिनिनादश्रावणं तथा ।
नृत्तवादित्रगीताद्यैरर्चयेन्मन्त्रतस्ततः ॥५७॥

---

1. "द्रव्यैरर्घ्यार्पणं चरेत्" इति भवेत्.

मूलमन्त्रेण दद्यात्तु पुष्पं देवाय देशिकः ।
पुष्पाञ्जलिं प्रतिदिशं प्रदक्षिणपुरःसरम् ॥५८॥
दत्त्वा पुनः प्रणम्याथ स्तोत्रैर्देवं स्तुवीत वै ।
स्वमात्मानं भगवते किंकरत्वाय वेदयेत् ॥५९॥
ततो ध्यात्वा जपेन्मन्त्रं यथाशक्ति समाहितः ।
आचार्यं गन्धपुष्पाद्यैः समभ्यर्च्य मुने ततः ॥
सर्वभोगैस्तु संपूर्णान्मन्त्रांस्तस्मै निवेदयेत् ।
मुखवासं ततो दद्यात्ताम्बूलं चार्घ्यमेव च ॥६१॥

(अथ चतुर्थं भोज्यासनम्)

भोज्यासनमथाभ्यर्च्य देवं विज्ञाप्य पादुके ।
दद्यात्तत्रोपविष्टेऽस्मिन्पाद्यमाचमनं ततः ॥६२॥
अर्हणं च ततः कृत्वा दध्याज्यक्षीरमाक्षिकम्[1] ।
गन्धं च पात्रे निक्षिप्य शोषणादिकमाचरेत् ॥
संप्रोक्ष्यार्घ्यजलेनैव मधुपर्कमथो दिशेत् ।
ततो दद्यात्सुवर्णं च गां च रत्नानि पूजकः ॥६४॥

(हविर्निवेदनम्)

सुसंस्कृतान्नमाज्यं च दधिक्षीरमधूनि च ।
मूलानि मोदकान्स्निग्धान्व्यञ्जनानि फलानि च ॥
यानि कालोपपन्नानि शुचीनि गुणवन्ति च ।
स्वादिष्टानि प्रभूतानि हृद्यान्यन्यानि यानि च ॥

1. ०माक्षिकान् इति सर्वत्र.

विशोध्य शोषणाद्यैस्तु संप्रोक्ष्यार्घ्यजलेन तु ।
विधाय रक्षामस्त्रेण हविरर्हणपूर्वकम् ॥६७॥
मुद्रां तु सुरभिं कृत्वा देवायैतन्निवेदयेत् ।
अनुवासं ततो दद्याद्दर्पणं च ततः परम् ॥६८॥
दद्यादाचमनीयं च हस्तमार्जनचन्दनम् ।
मुखवासं च ताम्बूलं प्रदायास्मै प्रणम्य च ॥६९॥

(अथ पुनर्मन्त्रासनं पञ्चमम्)

अथ मन्त्रासनं न्यस्य कूर्चेन परिमृज्य च ।
गन्धपुष्पादिनाऽभ्यर्च्य दद्याद्विज्ञाप्य पादुके ॥
तथाऽधिरूढे देवेशे माल्यादिकमपोह्य तु ।
पाद्याचमनके [1]दत्वा ततो धूपं निवेदयेत् ॥७१॥
स्वादिष्ठानि फलान्यस्मै दद्यात्ताम्बूलमेव च ।
[2]गीतवादित्रनृत्ताद्यैर्देवमभ्यर्चयेत्ततः ॥७२॥
प्रदक्षिणं विधायास्मै प्रणमेद्दण्डवत्ततः ।

(अथ षष्ठं पर्यङ्कासनम्)

अथ पर्यङ्कमभ्यर्च्य देवं विज्ञापयेत्ततः ॥७३॥
ततः [3]पादुकदानेन देवे पर्यङ्कमास्थिते ।
पाद्यमाचमनीयं च पुनर्दत्वा समाहितः ॥७४॥

---

1. कृत्वा D E F.
2. गीतेत्यादिकमर्धद्वयं न दृश्यते A B C E F.
3. इत्थमेव सर्वत्र पाठः.

माल्यभूषणकादीनि व्यपनीय महामते[1] ।
शयनोचितमाल्यानि भूषणान्यंशुकानि[2] च ॥७५॥
सुखस्पर्शानि[3] चान्यानि दद्याद्यज्ञोपवीतकम् ।
दद्यादाचमनीयं च गन्धं पुष्पमथो दिशेत् ॥७६॥
मुखवासं च ताम्बूलं दत्वा स्तोत्रैः स्तुवीत[4] तम् ।
अष्टाङ्गेन प्रणामेन प्रणम्य शरणं व्रजेत् ॥७७॥
प्रदक्षिणसमेतेन देवं योगासनस्थितम् ।
मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ॥७८॥
कूर्मवच्चतुरः पादाञ्छिरस्तत्रैव पञ्चमम् ।

(दास्यप्रार्थना)

अज्ञानादथवा ज्ञानादशुभं यत्कृतं मया ॥७९॥
क्षन्तुमर्हसि तत्सर्वं दास्येन च गृहाण माम् ।
एवमाराधनं कुर्यादुभयत्र मुखे हरिम्[5] ॥८०॥
सुदर्शनं नृसिंहं च विष्णुरूपं सुदर्शनम् ।

(एवमनुष्ठितस्याराधनस्य मोक्षसाधनत्वम्)

समाराधयतस्त्वेवमेकाहमपि नारद ॥८१॥
मुक्तिः करे स्थिता तस्य सर्वे कामाश्च किं पुनः ।

---

1. महामुने D.
2. भूषणानि च तानि च (?) D.
3. सुखस्पर्शानि देवाय D E F.
4. स्तुवीत वै A B C E F.
5. उद्दिश्येति शेषः.

(आनुषंगिकफलसाधनत्वं कैमुतिकम्)

अनेन लोकपालाश्च सर्वे देवगणास्तथा ॥८२॥
[1]सिद्धगन्धर्वयक्षाश्च नागाश्चाप्सरसां गणाः ।
सर्वे वश्या भवन्तीह किं पुनर्भुवि मानवाः ॥८३॥
भूतप्रेतपिशाचाश्च कूश्माण्डाश्च विनायकाः ।
[2]प्रेष्यास्तस्य भविष्यन्ति साधकस्य महात्मनः ॥

(परिवाराद्यर्चनविधिः)

तथाऽस्य परिवाराणां देवानां शक्तियोषिताम् ।
मन्त्राणामस्त्रशस्त्राणां स्वैः स्वैर्नामभिरर्चनम् ।
नमोऽन्तैरुपचारैश्च कुर्यात्षोडशभिः क्रमात् ॥८५॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

भगवदाराधनविधिनिरूपणं नामाष्टाविंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १६९६)

---

1. इदमर्धं न दृश्यते B C.
2. प्रेष्यास्तत्र D.

ओम् ।

## अथ काम्याराधनविधिनिरूपणं नाम

## एकोनत्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(भगवदाराधनस्यानुषंगिकफलसाधनत्वकथंताप्रश्नः)

श्रीनारदः ।

एतदाराधनैः कस्य कथं देवादयः सुराः ।
अन्ये चोक्ता वशं यान्ति तन्मे ब्रूहि यथातथम् ॥

(तत्प्रतिवचनारम्भः)

अहिर्बुध्न्यः ।

क्षत्रियस्य विशेषेण जयार्थित्वान्महामुने ।
येनार्चनविशेषेण विश्वे वश्या भवन्ति हि ॥२॥
शृणुष्व तं समासेन कथयामि यथातथम् ।

(तत्तदाराधनविशेषाणां तत्तद्दिग्विजयसाधनत्वम्)

यदीच्छेद्दिग्जयं दिक्षु सर्वासु च महीपतिः ॥३॥

आराधनविशेषैस्तु तत्तद्विजयमाप्नुयात् ।

(तत्र प्राचीदिग्विषये)

नृपेभ्यो विजयाकाङ्क्षी प्राच्येभ्यश्चेन्महीपतिः ॥
आराधयेद्विशिष्टैस्तु द्रव्यैर्देवं सुदर्शनम् ।
सितपुष्पैः सितैर्वस्त्रैरङ्गरागैः सितैरपि ॥५॥
शाल्योदनैश्च दध्याढ्यैरर्चयित्वा सुदर्शनम् ।
[1]मण्डपे मण्डिते शुद्धे पूर्वोक्ते देवसंनिधौ ॥६॥
प्रासादलक्षणे कुण्डे चतुष्कोणपरिस्तृते ।
तत्र वह्निमथा[2]दाय काष्ठैः प्रज्वाल्य बैल्वकैः ॥७॥
आसीनः प्राङ्मुखो भूत्वा शुचिस्तत्र समाहितः ।
तस्मिन्फलानि बैल्वानि सर्पिःसिक्तानि नारद ॥
नियुतं मूलमन्त्रेण जुहुयाज्ज्वलितेऽनले ।
होमैरेभिः समुद्रान्ता प्राची वश्या भवेन्मही ॥९॥
फलानां कोटिहोमेन बैल्वानां वशमेष्यति ।
प्लक्षद्वीपस्य देशस्तु प्राच्यः सहमहीपतिः ॥१०॥
कोटिद्वयेन चैतेषां शाल्मली वशमेष्यति ।
देशः [3]प्राच्यः सभूपालः स्वदेश इव नारद ॥११॥
कुशः क्रौञ्चस्तथा शाकः पुष्करद्वीपसंज्ञितः ।

---

1. मण्डले D.
2. ०धाय E F.
3. प्राप्यः A.

एकद्वित्रिचतुःपञ्चषट्कैः प्राच्याः क्रमेण वै[1] ॥१२॥
कोटीनां फलहोमानां वशं यास्यन्ति [2]भूपतेः ।
द्वीपानामपि चैतेषां प्राची माघवती पुरी ॥१३॥
दशकोट्या तु होमानां वशं यास्यति सा ध्रुवम् ।
[3]पालनार्थं तु [4]लोकानामेकेनांशेन वासवः ॥१४॥
तत्रैव वर्तते सोऽपि साहाय्यं [5]तस्य यास्यति ।
स्त्रीभिरन्नैश्च पानैश्च वाजिभिः परमैर्गजैः ॥१५॥
यथा स्वस्मिन्पुरे राजा विहरत्यविशङ्कया ।
चिन्तितोपनतैरेव तैर्द्रव्यै रंस्यते नृपः ॥१६॥
अस्य प्रभावतः सर्वे विष्टब्धाः सर्वसागराः ।
गन्तुं [6]योग्या भविष्यन्ति स्यन्दनेन यथा स्थली ॥
हारं च वासवस्तस्य चक्रवर्तित्वलक्षणम् ।
सर्वरत्नमयं दिव्यमुपनेष्यति च स्वयम् ॥१८॥

(दक्षिणदिग्विषये)

दक्षिणाशाजयाशा चेद्जनिष्ट महीपतेः ।
पूर्वोक्ते मण्डपे देवं दक्षिणाभिमुखं नयेत् ॥१९॥

---

1. तु D.
2. भूमिपाः B C.
3. पावनार्थं A B C E F.
4 होमाना० D.
5. तत्र D.
6. शक्यम् (?) B C.

रक्तमाल्याम्बरधरं रक्तचन्दनरञ्जितम् ।
रक्ताम्बरधरं [1]देवमभ्यर्च्योक्तेन वर्त्मना ॥२०॥
गुडौदनं हविस्तस्मै निवेद्य तिलमिश्रितम् ।
अर्धचन्द्रोपमं कुण्डं कृत्वा प्रासादलक्षणम् ॥२१॥
कुशैः पुष्पैश्च लाजैश्च परिष्कृतमविक्षतम् ।
दक्षिणाभिमुखस्तत्र समासीनोऽग्रतो विभोः ॥
मन्त्रेण वह्निमादाय काष्ठैः प्रज्वाल्य खादिरैः ।
[2]पद्मानां चैव रक्तानां नियुतैर्होममाचरेत् ॥२३॥
ततः सा दक्षिणा पृथ्वी सागरान्ता वशा भवेत् ।
सोपहाराश्च राजानस्तत्रत्या द्वारि वारिताः ॥२४॥
प्रतीक्षमाणाः स्थास्यन्ति कालं तस्य महात्मनः ।
ततो दक्षिणदि[3]ग्भागे षट्सु द्वीपेषु संमताः ॥२५॥
एकद्वित्रिचतुःपञ्चषड्भिर्वश्याः सभूभुजः ।
रक्तपद्माहुतीनां च कोटीनां तु यथाक्रमम् ॥२६॥
एषा दक्षिणतो रम्या याम्या संयमिनी पुरी ।
सा रक्तपद्महोमानां दशकोट्या वशा भवेत् ॥२७॥
यमोऽपि तस्य भावेन प्रसन्नः प्रीतमानसः ।
राज्ञो मनीषितं [illegible]था वर्तयिष्यति ॥२८॥

---

1. देवं समभ्यर्च्योक्तवर्त्मना B C.
2. पद्मानामथ रक्तानाम् A B C.
3. °दिग्भागाः षड्द्वीपेषु सुसंमताः D.

अकालमरणं किंचित्तद्देशे न भविष्यति ।
ये पुर्यां संयमिन्यां च यमस्य वशवर्तिनः ॥२९॥
[1]ते सर्वे तस्य वशगा भविष्यन्ति न संशयः ।
दिव्ये [2]रक्ताङ्गदे रम्ये सार्वभौमत्वलक्षणे ॥३०॥
यमस्तु स्वयमादाय प्रीतस्तस्मै [3]प्रयच्छति ।

(पश्चिमदिग्विषये)

पश्चिमाशां प्रति यदा जिगीषुर्नृपतिस्तदा ॥३१॥
[4]मण्डपेऽलंकृते देवं पश्चिमाभिमुखं नयेत् ।
चित्रमालाधरं [5]चित्रैरंशुकैः समलंकृतम् ॥३२॥
चित्राङ्गरागैश्चित्राभिर्भूषाभिरुपशोभितम् ।
[6]मध्वोदनं हविः कृत्वा देवायैतन्निवेदयेत् ॥३३॥
पद्मोपमानं प्रासादं कुण्डं कृत्वा स्वलंकृतम् ।
तत्राधायाग्निमा[7]सित्वा देवस्य पुरतो वशी ॥३४॥
काष्ठैः शमीमयैरग्निं [8]प्रज्वाल्याथ समाहितः ।
[9]मध्वक्तैः करवीरैस्तु नियुतं जुहुयान्मनुम् ॥३५॥

1. इतःप्रभृत्यर्धत्रयं न दृश्यते D.
2. रत्नाङ्गदे E F.
3. प्रदास्यति B C E F.
4. मण्डले D.
5. चित्रैरंशुभिः D.
6. मन्थोदनैः D.
7. °मासाद्य D.
8. प्रज्वाल्यास्मिन् D.
9. मल्लिकैः कर° D.

ततः ससागरा पृथ्वी जम्बूद्वीपस्य पश्चिमा ।
वर्तिष्यते वशे तस्य राज्ञः सनृपतिस्तदा ॥३६॥
करवीराहुतीनां च कोट्या कोटिद्वयेन च ।
कोटित्रयचतुःपञ्चषट्[1]कैस्ते च यथाक्रमम् ॥३७॥
षड्द्वीपखण्डाः पाश्चात्या वशं यास्यन्ति भूपतेः ।
सुखाख्या वारुणी रम्या पुरी परमभास्वरा ॥३८॥
सदा संनिहितैर्भोज्यैर्लेह्यैः पेयैश्च पूरिता ।
दिव्यपादपसंयुक्तैर्नन्दनैरुपशोभिता ॥३९॥
सदोत्फुल्लाम्बुजाढ्याभिः सरसीभिः परिष्कृता ।
आक्रीडपर्वतैर्युक्ता नानारत्नविभूषितैः ॥४०॥
प्रासादैर्मण्डपैस्तुङ्गैर्मण्डिता सा हिरण्मयैः ।
एवंविधा पुरी तस्य राज्ञो भोग्या भविष्यति ॥
वरुणोऽपि स्वयं छत्रं मणिविद्रुमभूषितम् ।
मुक्तादामभिराकीर्णममृतस्यन्दि वन्दितम् ॥४२॥
चिह्नं तच्चक्रवर्ती[2]नां राज्ञे प्रीतः प्रदास्यति ।

(उत्तरदिग्विषये)

उदीचीं दिशमुद्युक्तो जेतुं यदि महीपतिः ॥४३॥
चक्राब्जविष्टरे देवमुत्तराभिमुखं नयेत् ।
पीताम्बराणि बिभ्राणं [3]पीतपुष्पैरलंकृतम् ॥४४॥

1. °षट्कैस्तैश्च D.
2. इत्थमेव सर्वत्र पाठः.
3. पीतपत्रै° D.

विद्रुमाभरणैर्युक्तं[1] कुङ्कुमक्षोदरञ्जितम् ।
घृतौदनं हविः कृत्वा तेनाभ्यर्च्य सुदर्शनम् ॥
कुर्यात्तस्याग्रतः कुण्डं वृत्तप्रासादलक्षणम्[2] ।
उदङ्मुखोऽग्निमाधाय कुण्डे मण्डपसंश्रिते ॥४६॥
काष्ठैरौदुम्बरैर्वह्निं प्रज्वाल्य ज्वलितेऽनले ।
नन्द्यावर्तप्रसूनैस्तु नियुतं जुहुयात्पुरः[3] ॥४७॥
तेनेदं भारतं वर्षं काञ्चनाचलसंयुतम् ।
सराजकं तस्य वशे भविष्यति न संशयः[4] ॥४८॥
लक्षद्वयेन होमानां वर्षं किंपुरुषाह्वयम् ।
सभूपं भूपतेस्तस्य वशमेष्यत्यसंशयम् ॥४९॥
लक्षत्रयेण वश्यं स्याद्धरिवर्षं सराजकम् ।
होमलक्षचतुष्केण भद्राश्वं वशमेष्यति ॥५०॥
पञ्चषट्सप्तभिर्होमलक्षाणां पृथिवीपतेः ।
इलावृतं केतुमालं रम्यकं च वशे भवेत् ॥५१॥
हिरणमये [5]मेरुवर्षे अष्टाभिर्नवभिस्तथा[6] ।
वशे भविष्यतो होमलक्षाणां समहीश्वरे ॥५२॥

---

1. ०र्जुष्टं D E.
2. वृतं A; वृत्तं B C E F.
3. पुरा D.
4. अष्टाचत्वारिंशः श्लोको न दृश्यते D पुस्तके.
5. कुरुवर्षे E F.
6. ०र्नवभिः क्रमात् D.

षण्णां प्लक्षमुखानां तु द्वीपानां [1]भोगभूमयः ।
उक्तसंख्यायुतैर्होमैर्वशमेष्यन्ति नारद ॥५३॥
सर्वेषां द्वीपवर्षाणामुत्तरत्र पुरी वरा ।
विभावरीति विख्याता सोमस्य परमाद्भुता ॥
दशकोट्या वशे तस्य [2]होमानां सा भविष्यति ।
[3]ये तस्यां देवतावर्गाः सोमस्य वशवर्तिनः ॥५५॥
ते सर्वे भूपतेस्तस्य वर्तिष्यन्ते वशे मुने ।
तस्य प्रभावतः सोमः स्वयमादाय चामरे ॥५६॥
स्वज्योत्स्नासंचयप्रख्ये रत्ननालसमन्विते ।
विश्वाधिराज्यचिह्ने ते शुभ्रे शीतलदर्शने ॥५७॥
प्रीतः प्रदास्यति [4]श्रीमानस्मै विस्मितकर्मणे ।

(विदिशां विषये)

महादिशां जयात्सिद्धो विदिशां वशिनो जयः ॥
उपहारान्प्रदास्यन्ति तत्तद्दिक्पालकाः परे ।

(ऊर्ध्वलोकस्य विषये)

ऊर्ध्वलोकजयोद्योगो यद्यवर्तिष्ट भूपतेः ॥५९॥

---

1. भाग° A D E F.
2. होमेनासौ A B C E F.
3. एतस्मिन्देवतावर्गाः इति सर्वत्र; B C पुस्तकयोस्तु देवताद्वीपाः इत्यपि पाठः.
4. श्रीमांस्तस्मै D.

देवं मण्डपरत्ने तु प्राङ्मुखासनमर्हयेत्[1] ।
गन्धवन्माल्यसंवीतं मुक्ताभूषणभूषितम् ॥६०॥
दिव्यचन्दनलिप्ताङ्गं क्षौमैः कल्पितवाससम् ।
एवमभ्यर्च्य विधिना पायसं खण्डसंमितम् ॥६१॥
आज्याढ्यं हविरावेद्य सर्वपक्वफलान्वितम् ।
प्रासादकुण्डमष्टाश्रं सर्वमङ्गलसंयुतम् ॥६२॥
कारयित्वाऽस्त्रमन्त्रेण[2] वह्निमादाय[3] मन्त्रवित् ।
कृष्णागुरुमयैः काष्ठैर्[4]ज्वलयेज्जातवेदसम् ॥६३॥
तत्राज्यहोमं कुर्याद्वै[5] शतकोटिसमन्वितम् ।
अन्तरिक्षं ततस्तेन होमेन वशमेष्यति ॥६४॥
तल्लोकवासिनः सर्वे सिद्धगन्धर्वकिन्नराः ।
यक्षाः किंपुरुषाश्चैव चारणाः साङ्गनागणाः ॥६५॥
वीणावेणुमृदङ्गैश्च वाद्यैस्तालैश्च सर्वशः ।
तस्यापदानचरित[6]गर्भा भोगवलीपराः ॥६६॥
गायन्तः परिवार्यैनं हर्षयिष्यन्ति भूपतिम् ।
कोटिकोट्या तु होमानां स्वर्गो वश्यो भविष्यति ॥

---

1. प्राङ्मुखासनसंश्रितम् A B C E F.
2. अग्निमन्त्रेण E.
3. ०धाय E F.
4. दिव्यै० D.
5. कुर्वीत D.
6. ०चरितमहाभोगा० D.

तत्र देवैर्महेन्द्रोऽपि देव्या शच्या समन्वितः ।
आरुह्यैरावतं नागमप्सराणां गणैः सह ॥६८॥
तमभ्येत्य महात्मानमवरुह्य मुदान्वितः ।
मणिपीठं समारोप्य वाचयित्वा च मङ्गलम् ॥
नृत्तैर्गीतैश्च वाद्यैश्च दिव्यदुन्दुभिनिस्वनैः ।
शङ्खकाहलनादैश्च सह तीर्थाहृतैर्जलैः ।
वासवश्चक्रवर्तित्वे [2]राजानमभिषेक्ष्यति ॥७०॥

मणिमुकुटमथास्मै वारणं दिव्यमेकं
हयमनिलसमानं पुष्पकाभं विमानम् ।
सरसिजपरिक्लृप्तां काञ्चनीं दिव्यमाला-
मपि च [3]हरुषजुष्टो दास्यति [4]स्वात्मसाम्यम्॥

हयमेधशतेन [5]याजयित्वा
नृपतिं सर्वमहीपतिं विधाय ।
शतमप्सरसः प्रदाय तस्मै
त्रिदिवं यास्यति वृत्रहा सदेवः ॥७२॥

(नागलोकस्य विषये)

[6]नागलोकेषु जाता चेज्जिगीषा चक्रवर्तिनः ।

---

1. सर्वत्रायमेव पाठः.
2. राजत्वे चाभि° B C D E F.
3. सर्वत्रायमेव पाठः.
4. स्वां शचीशः A E F.
5. योजयित्वा B C F.
6. नाकलोकेषु जाता वै जिगीषा यदि भूपतेः D.

पद्मरागमयैर्दिव्यैर्भूषणैरुपशोभितम् ॥७३॥
रक्तचन्दनलिप्ताङ्गं देवं पद्मैः समर्चयेत् ।
पिष्टौदनं गुडाढ्यं च हविस्तस्मै निवेद्य च ॥७४॥
प्रासादलक्षणे कुण्डे षट्कोणे ज्वलितानले ।
अपूपानां तु कोटीनां कोट्या होमं समाचरेत् ॥
तेन तक्षकमुख्यानां नागानां परमा पुरी ।
वश्या भवेद्भोगवती स्वपुरीवास्य भूपतेः ॥७६॥

तस्य प्रभावमवलोक्य स नागराजो
रत्नानि भास्वरतराणि महान्ति भान्ति ।
द्वे कुण्डले मणिमये च सहाङ्गनाभि-
रादाय सत्यमुपयास्यति सार्वभौमम् ॥

(अथ सामान्यपरिभाषा)

[1]उक्तानामप्यनुक्तानां शृणु नारद लक्षणम् ।
सामान्यं येन सिद्धिः स्यादीप्सितार्थस्य मन्त्रिणः ॥
एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवात्मकाः ।
विहारास्त्रिचतुःपञ्च समुखान्तायतोच्छ्रिताः ॥७९॥
दिग्विदिक्षु तथा मध्ये नवकाः परिकीर्तिताः ।

---

1. इतःप्रभृति यावदध्यायसमाप्ति न दृश्यते A B C F पुस्तकेषु.

दिक्षु मध्ये तथा पञ्च शेषाः प्राङ्मुखपङ्क्तयः ॥
एकद्व्यादियुगाश्चैव शान्तिपुष्ट्योः प्रकीर्तिताः ।
[1]एकत्र्याद्ययुजश्चैव क्षुद्रेषु नवकं विना ॥८१॥
पलाशौदुम्बराश्वत्थखदिराद्याश्च याज्ञियाः ।
दूर्वाद्याश्च तिलाद्याश्च प्रशस्ताः शुभकर्मणि ॥
[2]कारस्तरादयः क्षुद्रे कटुबीजादयस्तथा ।
सहस्राद्या लक्षमध्याः कोट्यन्ता होमजातयः ॥
एको द्वौ बहवो वाऽपि [3]यथर्घ्या ऋत्विजः स्मृताः।
[4]एकस्मिन्वह्निकुण्डे चेज्जुहुयुः प्रागुदङ्मुखाः ॥
वासुदेवालयोद्यानमन्दिरेषु शुभा क्रिया ।
अशुभा तु श्मशानादावथ कालविधिक्रमः ॥
[5]युक्षु कुर्याद्दिनर्क्षेषु शुभामन्यामथान्यथा ।
व्यस्तैरथ समस्तैर्वा यद्वा [6]कामविकल्पितैः ॥८६॥
[7]समिदाज्यादिभिर्लक्षकोटिहोमादयः स्मृताः ।

---

1. एकत्र्यादियुगं चैव E.
2. करस्करादयः क्षुद्रे कशबीजादयस्तथा (?) E.
3. यथार्घा (?) E; यथाल्पा D.
4. एतास्मिन् D.
5. दिक्षु E.
6. कामविकर्मितैः D.
7. सद्भिरा° (?) D.

एवमभ्यूह्य कुर्वीत मन्त्रेणेष्टस्य साधनम् ॥८७॥
अनुक्तमिव यत्किंचित्तत्स्वगृह्योक्तमाचरेत् ।
अपूर्वो वा भवेद्धोमो नाघारादिसमन्वितः ॥८८॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

काम्याराधनविधिनिरूपणं नामैकोनत्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १७८४)

---

1. एवमावाह्य E.

ओम् ।

## अथास्त्राणां जन्मनामनिरूपणं नाम त्रिंशोऽध्यायः ।

ध्यातं सकृद्भवानेककोट्यघौघं हरत्यरम् ।
सुदर्शनस्य तद्दिव्यं भर्गो देवस्य धीमहि ॥

(तत्र ब्राह्माद्यस्त्राणां देवपरिवारत्वकथंताप्रश्नः)

श्रीनारदः ।

कथं ब्रह्मास्त्रमुख्यानां महतां शक्तिशालिनाम् ।
अस्त्राणामप्रमेयाणां देवस्य परिवारता ॥१॥

(तेषां जन्मनामप्रश्नः)

कस्मादेतानि जातानि महास्त्राणि महेश्वर ।
अमीषां कानि नामानि तन्ममाचक्ष्व पृच्छतः ॥

(तत्प्रतिवचनार्थमाख्यायिकारम्भः)

अहिर्बुध्न्यः ।

पुरा नारायणो देवः स्वयमेव व्यवस्थितः ।
प्राक्सृष्टेर्न रतिं लेभे लीलोपकरणादृते ॥३॥

(लीलार्थं भगवता स्वात्मनो बहुभवनसंकल्पः)

ततो लीलार्थमात्मानं बहुकल्पयदीश्वरः ।

(पुरुषाधिष्ठितप्रधानसृष्टिः)

अथ प्रधानमसृजत्पुरुषाधिष्ठितं स्वतः ॥४॥

(प्रधानान्महतः सृष्टिः)

ततो महान्तमव्यक्ताज्जनयामास नारद ।

(महतोऽहंकारसृष्टिः)

गुणत्रयात्मकं तस्मादहंकारमतः परम् ॥५॥

(सात्त्विकाहंकारादेकादशेन्द्रियसृष्टिः)

इन्द्रियाणि दशैतानि ज्ञानकर्मात्मकानि वै ।
मनश्च सात्त्विकात्तस्मादहंकारादजीजनत् ॥६॥

(तामसाहंकाराद्भूतसूक्ष्माणां भूतानां च सृष्टिः)

[1]भूतानि भूतसूक्ष्माणि दशैतानि महामुने ।
असृजत्तामसात्तस्मादहंकाराज्जनार्दनः ॥७॥

(अथ सप्तावरणवेष्टिताण्डसृष्टिः)

महदादिविशेषान्तैरेतैरण्डमजीजनत् ।
दशोत्तरैरावरणैः सप्तभिः परिवेष्टितम् ॥८॥

(अण्डे चतुर्मुखसृष्टिः)

तस्मिन्नण्डे स्वयं विष्णुः प्रजापतिमथाकरोत् ।
उच्चावचानां भूतानां कर्तारं निजशक्तिभिः ॥९॥

---

1. एतदाद्यर्धत्रयं D पुस्तके न दृश्यते; भूतानीत्यत्र जातानीति पाठः A B C पुस्तकेषु.

(भगवच्छक्तिभूतस्य कालस्य सृष्टौ सहकारित्वम्)

हरिः स्वशक्तिरूपेण कालेन च समन्वितः ।
महदादिषु सृज्येषु सृष्टिं चक्रे जगन्मयः ॥१०॥

(चतुर्मुखव्याजेन भगवत एव विचित्रजगत्स्रष्टृत्वम्)

विष्णुर्ब्रह्मापदेशेन चिदचिन्मिश्रितं जगत् ।
विचित्रं जनयामास तत्तच्छक्तिसमन्वितः ॥११॥

(वेदशब्देभ्य एव देवादीनां नामरूपव्याकरणम्)

वेदानालोच्य भूतानां देवादीनां यमः प्रभुः ।
नामरूपे च विविधे यथापूर्वमकल्पयत् ॥१२॥

(आप्तकामस्यापि स्रष्टृत्वोपपत्तिः)

[1]सर्वदाऽवाप्तसकलकामोऽपि परमेश्वरः ।
जन्तुभिर्निजसृष्टैश्च लीलारसमथान्वभूत् ॥१३॥

(भगवत एव पालकत्वम्)

अनालोच्यैव जगतां त्रातारमपरं हरिः ।
स्वयमे[2]वांशरूपेण पालयत्यखिलं जगत् ॥१४॥

(दुष्टनिरसनं विना पालनस्याशक्यत्वम्)

दैतेयानां दानवानामन्तरेण निबर्हणम् ।
न शक्यते पालयितुं [3]सदेवासुरमानवम् ॥१५॥

---

1. सर्वदाऽवाप्तकामोऽपि भगवान्परमेश्वरः D.
2. °वाङ्गरूपेण D.
3. इत आरभ्य न शक्यते धारयितुं इत्यन्तं पादाष्टकं B C पुस्तकयोर्भ्रमेण त्यक्तम्.

(दुष्टनिबर्हणाय भगवत एव चक्रात्मनाऽवस्थानम्)

अतश्च भगवान्विष्णुश्चक्ररूपी व्यवस्थितः ।
हन्यन्ते तेन चक्रेण विश्वे दैतेयदानवाः ॥१६॥

(देवादीनां सुदर्शनधारणासामर्थ्यम्)

देवादीनां सुराणां च विशेषाच्च महीक्षिताम् ।
न शक्यते धारयितुं सुदर्शनमनुत्तमम् [1] ॥१७॥

(शस्त्रास्त्ररूपेण तस्य विभागः)

अतस्तेषां विभक्तानि विविधानि बहूनि च ।
अस्त्राणि शस्त्रजातानि शत्रुनाशाय नारद ॥१८॥

(भगवदात्मकात्सुदर्शनादस्त्राणामुत्पत्तिः)

अस्त्राणि तानि निर्जग्मुर्विष्णुरूपात्सुदर्शनात् ।
अमोघानि ततोऽस्त्राणि भीषणानि महान्ति च ॥
प्रजाः स्त्रष्टुं मनश्चक्रे चक्ररूपी जगत्पतिः ।
स्त्रष्टुमस्त्राणि सर्वाणि स्वस्माद्रूपान्महामुने ॥२०॥

तस्माद्देवो भीममापद्य चोग्रं
रूपं पिङ्गं पिङ्गलावृत्तनेत्रम् ।
दंष्ट्रानिर्यत्पावकप्लुष्टकाष्ठं
भीमं केशैः पिङ्गलैर्विद्युदाभैः ॥२१॥

(तत्र मुखजातान्यस्त्राणि)

नारायणं पाशुपतं ब्राह्ममस्त्रं तथैव च [2] ।

---

1. चक्ररूपी जनार्दनः D.
2. एतदनन्तरं A B C E F पुस्तकेषु " तैजःप्रभं च पैशाचमस्त्रमैन्द्रं

अस्त्रं ब्रह्मशिरो नाम विष्णुचक्रं च जृम्भणम् ॥
कालपाशमथाग्नेयमस्त्रं हयशिरस्तथा ।
प्रस्वापनं तापसं[1] च कालास्त्रममितप्रभम् ॥२३॥
दण्डचक्रं कालचक्रं धर्मचक्रं[2] तथैव च ।
शैवं शूलं रौद्रमस्त्रं त्रिशूलं घोरमेव च ॥२४॥
अस्त्राण्येतानि मुख्यानि मुखतो जज्ञिरे विभोः ।

(अथ वक्षोजातान्यस्त्राणि)

संमोहनं तथैषीकमैन्द्रं चक्रं महाद्युति ॥२५॥
अशनी द्वे च शुष्कार्द्रासंज्ञिते सर्वभीषणे ।
[3]पैनाकमस्त्रं कङ्कालं कापालमतिदारुणम् ॥२६॥
सौर्यं वारुणपाशं च संतापनमरिंदमम् ।
अस्त्रं वारुणमत्युग्रं धर्मपाशं तथैव च ॥२७॥
एतान्यस्त्राणि देवस्य निर्जग्मुर्वक्षसस्तथा ।

(अथोरुजातान्यस्त्राणि)

शक्तिद्वयं च वायव्यमस्त्रं मौसलमेव च ॥२८॥
[4]गान्धर्वं दर्पणं चास्त्रं शोषणं परदारणम्[5] ।
तेजःप्रभं च पैशाचमैन्द्रमस्त्रं सुदारुणम् ॥२९॥
याम्यं विलापनं चास्त्रं वैद्याधरममित्रहम् ।

---

सुदारुणम् ” इत्यर्धमधिकं दृश्यते; तत्तु एकोनत्रिंशश्लोके वर्तमानं लेखकेन प्रमादादत्र लिखितमिति प्रतिभाति. 1. तामसं B C D; स्वापनं E.
2. धर्मचक्रमथापरम् D. 3. वैनायकास्त्रं D.
4. गन्धर्वतर्पणं B C D. 5. °दारुणम् E F.

कङ्कणीं मोदकीं चैव शिखरं क्रौञ्चमेव च ॥३०॥
एतानि जनयामास निजोर्वोरुरुविक्रमः ।

(अथ पादजातान्यस्त्राणि)

असिरत्नं प्रशमनं कन्दर्पदयितं तथा ॥३१॥
मदनं सौमनं चास्त्रं सत्यं संवर्तनं तथा ।
मायाधरं च सोमास्त्रं त्वाष्ट्रं शीतेषुमेव च ॥३२॥
भगास्त्रमस्त्राण्येतानि पद्भ्यां जातानि नारद ।

(अथापराङ्गजातान्युपसंहारास्त्राणि)

[1]संदामनं सत्यवन्तं [2]धरणं धृष्टमेव च ॥३३॥
भृशाश्वतनयं चैव सत्यकीर्तिं तथैव च ।
मोहनं [3]रभसास्त्रं च [4]सर्वनाहं पराङ्मुखम् ॥३४॥
जृम्भकं प्रतिहारं च तथा वरणमुत्तमम् ।
अवाङ्मुखं धनं धान्यं वृषाक्षं कामरूपकम् ॥३५॥
दृढनाहं कामरुचिं सुनाभं मकरं तथा ।
दशाक्षं वृत्तिमन्तं च दशवक्त्रं तथाऽपरम् ॥३६॥
रुचिरं दशशीर्षं च योगंधरमामित्र[5]र्हम् ।
[6]अनिद्रं मकरं चैव [7]भोक्तारं कङ्कणीं तथा ॥३७॥

---

1. संदमानं (?) B A; सदामनं D.
2. धारणं B C E; वरणं D.
3. भासमस्त्रं च D. 4. सर्वनाभं D; सर्वनागं B C.
5. °जम् D. 6. अनिलं D. 7. भेत्तारं D.

शतोदरं सौमनसं पद्मनाभं तथैव च ।
महानाभं प्रमथनं ज्यौतिषं [1]क्रथनं तथा ॥३८॥
त्रैराशिं सार्चिमालिं च [2]विमलां धृतिकां तथा ।
[3]सृष्टिं तथा [4]विषमास्त्रं [5]सुध्याताहं तथैव च ॥३९॥
[3]विधूतं कृशनं चैव लक्षाक्षं कर्शनं तथा ।
उपसंहाररूपाणि सर्वाण्यस्त्राण्यमूनि वै ।
जनयामास देवोऽसौ स्वापराङ्गात्परंतपः ॥४०॥

(अध्यायार्थनिगमनम्)

एवमुक्तानि नामानि जन्मान्यपि च नारद ।
अस्त्राणामपि माहात्म्यं यन्त्रस्यास्य समासतः ॥

इति श्रीपाञ्चरात्रे तन्त्ररहस्ये अहिर्बुध्न्यसंहितायां

अस्त्राणां जन्मनामनिरूपणं नाम त्रिंशोऽध्यायः ।

ओम् ।

(आदितः श्लोकाः १८२५)

---

1. शमकं D.
2. विमलाव्रतिकां तथा D.
3. इदमर्धद्वयं D पुस्तके न दृश्यते.
4. सुषमास्त्रं E.
5. संध्याताहं B C; पाठद्वयमपि चिन्त्यम्.